# पक्षता ।

श्रीगङ्गेशोपाध्यायविरचिता ।

श्रीरघुनाथशिरोमणिना

तथा

श्रीमथुरानाथतर्कवागीशेन कृतव्याख्यया समलङ्कृता

तथा

श्रीजगदीशतर्कालङ्कारकृतशिरोमणिव्याख्याया

विवृतिसहिता

तथा

पण्डितकुलपतिना बि, ए उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

ङ्कलिता जगदीशकृतटीकाया वादार्थसमलङ्कृता च ।

द्वितीयसंस्करणम् ।

कलिकातानगरे

कलिकातायन्त्रे

मुद्रिता ।

इं १८९७ ।

Narayan Venketesh Shastry Dravid Varana

# पक्षता ।



श्रीगङ्गेशोपाध्यायविरचिता ।



श्रीरघुनाथशिरोमणिना

तथा

श्रीमथुरानाथतर्कवागीशेन कृतव्याख्यया समलङ्कृता

तथा

श्रीजगदीशतर्कालङ्कारकृतशिरोमणिव्याख्याया

विवृतिसहिता

तथा

पण्डितकुलपतिना बि, ए उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

सङ्कलिता जगदीशकृतटीकाया वादार्थसमलङ्कृता च ।


द्वितीयसंस्करणम् ।

कलिकातानगरे

कलिकातायन्त्रे

मुद्रिता ।

इं १८९७ ।



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर वि, ए

PANDIT KULAPATI

JIBANANDA VIDYASAGARA, B. A.

*Superintendent Free Sanskrit College, Calcutta.*

# पक्षता ।



व्याप्तेरनन्तरं पक्षधर्मता निरूप्यते ।

तत्र न तावत् सन्दिग्धसाध्यधर्मत्वं पक्षत्वम् सन्देहो हि न विशेषणं परामर्शपूर्वं लिङ्गदर्शन-व्याप्तिस्मरणादिना तस्य नाशात् नोपलक्षणम् अव्यावर्त्तकतापत्तेः नापि साधकबाधकप्रमाणा-भावः उभयाभावस्य प्रत्येकसत्त्वेऽपि सत्त्वात् नापि अभावद्वयं तथा बाधकप्रमाणाभावस्य व्यर्थ-त्वात् ह्रदादेः पक्षत्वेऽपि बाधहेत्वसिद्ध्यादेराव-श्यकत्वेन अनुमित्यनुत्पादात् नापि साधकप्रमा-णाभावः श्रोतव्यो मन्तव्य इति श्रुत्या समानविष-यकश्रवणान्तरं मननबोधनात् प्रत्यक्षदृष्टेऽप्यनु-मानदर्शनात् एकलिङ्गावगतेऽपि लिङ्गान्तरेण तदनुमानाच्च मन्तव्यश्चोपपत्तिभिरिति स्मर-णात् । अथ सिषाधयिषितसाध्यधर्मा धर्मी पक्षः तथाहि मुमुक्षोः शब्दादात्मावगमेऽपि मन-नस्य मोक्षोपायत्वेन [1] सिद्धिविशिष्टानुमितीच्छया आत्मानुमानम् अतएव प्रत्यक्षपरिकलितमपि

अर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः नहि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातार इति वाचस्पतिवचनयोरविरोधः अनुमित्सातद्विरहाभ्यां तदुपपत्तेरिति चेन्न सन्देहवत्परामर्शपूर्वं सिषाधयिषाया अपि अभावात् योग्यतायाश्च अनिरूपणात् सिषाधयिषाविरहेऽपि घनगर्जितेन मेघानुमानात् स्वकारणाधीनतृतीयलिङ्गपरामर्शवत्त्वेन अनपेक्षितानुमानदर्शनाच्चेति। उच्यते सिषाधयिषाविरहसहकृतसाधकप्रमाणाभावो यत्रास्ति स पक्षः तेन सिषाधयिषाविरहसहकृतं साधकप्रमाणं यत्रास्ति स न पक्षः यत्र साधकप्रमाणे सति असति वा सिषाधयिषा यत्र वा उभयाभावस्तत्र विशिष्टाभावात् पक्षत्वं यद्यपि पक्षत्वस्य केवलान्वयित्वात् नास्य भेदकत्वं तथापि पक्षपदप्रवृत्तिनिमित्तमुक्तम्।

इति श्रीमन्महामहोपाध्याय श्रीगङ्गेशोपाध्याय विरचिता पक्षता समाप्ता।

## अथ श्रीरघुनाथशिरोमणि कृता टीका प्रारभ्यते।

अनुमितिलक्षणैककार्य्यानुकूलतासङ्गत्या पक्षधर्मतां निरूपयितुमाह व्याप्तीति। सन्दिग्धेति। यत्र साध्यस्य यादृशसम्बन्धावगाहिनिर्णयनिवर्त्त्यो यः संशयस्तत्र स तादृशसम्बन्धेन साध्यानुमिता पक्षता इत्यर्थः तेन न पक्षसाध्यविशेष्यकसंशया-

ननुगमो न वा सम्बन्धान्तरेण सन्देहेऽपि निर्णीतसम्बन्धेन पक्षत्वम् न वा तमःप्रभृतिषु समवायेन आकाशादिसाधने तद्वैकल्यम्। संशययोग्यतां निरस्यति नापीति। साधकबाधकमाने सिद्धिबाधौ केवलान्वयिनि च पक्षनिष्ठाभावप्रतियोगित्वधीरेव सुलभोऽबाधः। ननु तत्रापि पुनरनुमित्सा ततः परामर्शानन्तरं स्मरणात्मकाद्वा परामर्शादनुमीतिष्टसाधनताविषयकादनुमित्सा ततोऽनुमितिरिति फलबलात् कल्पनीयमित्यत आह सिषाधयिषेति। न च अनुमितिजनिकेच्छेव पक्षता सा च क्वचित् स्वनिष्ठैव सर्वत्र ईश्वरनिष्ठैव सुलभेति वाच्यं ? तस्य अनित्यत्वेन सिद्धौ सत्यामपि पक्षताप्रसङ्गात्। न च तस्यास्तदानीं न तज्जनकत्वं तद्धि न तद्योग्यता अनपायात्। न च तदुपधानम् अनुमितेः पूर्वं तदभावात् न च तत्सामग्रीसमवधानं कारणमात्रस्य पक्षताकुक्षिनिक्षेपप्रसङ्गाच्छेषवैयर्थ्यात् तदानीं सामग्रीविरहप्रयोजकव्यतिरेकप्रतियोगिनः कारणस्य वक्तव्यत्वापाताच्च। सिषाधयिषेति यत्र अनुमित्सानन्तरं साध्यतद्व्याप्यवत्त्वविशिष्टपक्षस्मरणम् अनुमितीष्टसाधनताविषयकतादृशस्मरणाद्वा अनुमित्सा अनुमित्सापूर्वकालोत्पन्नविशेषस्मरणात् वा अनुमित्साकालोत्पन्नेन्द्रियसन्निकर्षसहितात् साध्यतद्व्याप्यविशिष्टपक्षप्रत्यक्षं तदनन्तरं च अनुमितिस्तत्र पक्षतासम्पत्तये सह क्षतान्तं साधकमानविशेषणम्। सिषाधयिषा च तत्साध्यविशिष्टतत्पक्षविषयत्वप्रकारिका अनुमितिविषयिणीच्छा यत्किञ्चित् गोचरं ज्ञानं जायतामिति इच्छायामपि सिद्धिसत्त्वे अनुमित्यनुत्पापादात् अनुमितित्वाप्रकारिकायामपि प्रत्यक्षाद्यतिरिक्तं पर्वते वह्निज्ञानं जायतामिति इच्छायां प्रत्यक्षाद्यनन्तरमनुमित्युत्पादात् च यादृशयादृशेच्छासत्त्वे सिद्धौ सत्यामनुमितिस्तत्तदिच्छाभाव-

समुदायस्य विशेषणत्वात् इच्छाया अननुगमेऽपि न क्षतिः धूमेन अनुमिनुयामिति इच्छायामालोकपरामर्शादत्यामपि सिद्धौ यदि न अनुमितिस्तदा अन्यमात्रलिङ्गकानुमितीच्छा कामिनीजिज्ञासादिवत् पृथक् प्रतिबन्धिका यदि च तत्र अनुमितिस्तदा सिद्धिसत्त्वे तत्र अनुमितेर्वारणाय तत् लिङ्गकानुमितीच्छा तदन्यमात्रलिङ्गकानुमितीच्छातिरिक्तानुमितीच्छा वा वाच्या लिङ्गविशेषेण अपि च नियन्त्रितं पक्षत्वं तल्लिङ्गकानुमितौ सिद्धिकालीना तल्लिङ्गकानुमितीच्छाविरहविशिष्टान्यलिङ्गकानुमितीच्छा एव वा प्रतिबन्धिका साधकमानं साध्यवत्त्वनिश्चयः पाषाणमयत्वादिना पर्वते तेजस्त्वादिना च वह्नेः सिद्धौ अपि पर्वतत्वेन तत्र वह्नित्वेन च तस्य अनुमितेर्धर्मित्वसाध्यत्वयोरवच्छेदकौ अनुप्रवेशनीयौ यदि च पर्वतत्वसामानाधिकरण्येनैकत्र साध्यसिद्धौ अपि विना अनुमित्सामन्यत्र तादृशानुमितिरानुभविकी तदा धर्मिविशेषोऽपि निवेश्यो न अन्यथा पक्षतावच्छेदकस्य सामानाधिकरण्येन साध्यसिद्धौ अपि तदवच्छेदेन अनुमितिदर्शनात् पक्षतावच्छेदकावच्छेदेन अनुमितिं प्रति तदवच्छेदेन सिद्धेस्तत्सामानाधिकरण्यमात्रेणानुमितिं प्रति तु सिद्धिमात्रस्य विरोधित्वम् इत्यञ्च लिङ्गभेदन्यायोऽनुसरणीयः साध्यविशेष्यकसिद्ध्यनन्तरं पक्षविशेष्यकानुमितेः प्रामाणिकत्वे तां प्रति पक्षविशेष्यिकैव सिद्धिर्विरोधिनी एवञ्च पक्षविशेष्यकसिद्ध्यनन्तरमपि साध्यविशेष्यिकानुमितिर्जायते तुल्यन्यायात् समानाकारायाः सिद्धेः प्रतिबन्धकत्वे पर्य्यवसानात् तादृशानुमितिं प्रति सिद्धिमात्रं विरोधिसाध्यप्रसिद्धिरेव वा अतएव प्रसिद्धसाध्यकस्थले पक्षविशेष्यिकैव अनुमितिरनुभूयत इति अत्र च व्याप्तिस्मरणादिना पूर्वानुमित्सानाशे परामर्शकाले च

सिद्धिसत्त्वेऽनुमित्सान्तरोत्पत्त्यैव अनुमितिस्तथैव कारणी-भूतस्य विशिष्टाभावस्य सम्पत्तिरिति उपाध्यायाः। अन्ये तु द्वित्रिक्षणान्तरितायामपि अनुमित्सायामनुमितिदर्शनात् अनुमित्सा योग्यता वाच्या सा च न स्वोत्पत्त्यनन्तरं स्वविषय-सिद्ध्यनुत्पादः अनुमित्सानन्तरमन्तरानुमित्यनुत्पादे दिव-सादिविलम्बे नेन्द्रियादिना निर्णीतेऽपि साध्ये लिङ्गपरामर्शा-दनुमितिप्रसङ्गात् किन्तु अनुमित्सानन्तरं लिङ्गदर्शनादि-क्रमेण यावता कालेन उत्सर्गतः परामर्शो जायते तावानेव कालः फलबलेन तथा कल्पनात् अथवा अनुमित्सोत्पत्त्यन-न्तरमनुमित्सानाशेऽपि सिद्धौ सत्यां यावत् कालमध्ये अनुमिति-र्जायते तावानेव कालोऽनुमित्सया उपलक्षितः यदि च सिद्ध्य-नन्तरं तन्नाशेऽपि द्वित्रिक्षणमध्ये विना अनुमित्सामनुमि-त्यनुत्पादोऽनुभवसिद्धस्तदा सिद्ध्यापि तावानेव समय उप-लक्षणीयः विशिष्यलक्षणनियमस्त्ववधेयः कारणीय इति वदन्ति। अत्र च यत्र साध्यनिर्णयेच्छानन्तरं पूर्वोक्तन्यायेन साध्यतद्व्याप्यविशिष्टपक्षस्य प्रत्यक्षं स्मरणं वा यत्र वा साध्य-तद्व्याप्यधर्मः तादृशव्याप्यवत्सान्तरविशिष्टपक्षस्य तत्पक्षक-साध्यतद्व्याप्यवत्त्वानुमित्योरिष्टसाधनतायाश्चैवं स्मरणं तत-स्तयोरनुमित्सा ततः साध्यतद्व्याप्यवत्त्वानुमितिस्तत्र तद-नन्तरमनुमितिप्रसङ्गः योग्यताविवक्षणे तु सुतराम् एवेति तदिच्छाविषयसिद्ध्यनुपहितत्वं तद्विशेषणं पक्षसाध्यभेदेन च पक्षताया भेदात् पृथक् पृथगेव कार्यकारणभावः तथाच यत्र सिद्ध्यनन्तरं कदापि अनुमितिर्न जाता तत्र सिद्ध्यभाव-मात्रं कारणं न तु तत्र इच्छानिवेशोऽपि गौरवात् प्रयोजना-भावात् च तेन यत् पक्षकसाध्यकानुमितौ कस्य अपि इच्छा न जाता तत्र उक्तिसाधारण्यमात्रसम्पादनाय ईश्वरे-

च्छानिवेशनायासो न उपादेयः। यत्तु सिषाधयिषाविरह-विशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्ना या सिद्धिः सिषाधयिषाविरहविशिष्टायास्तस्या अभावः- पक्षता अथ तृतीयक्षणव्यवधायकद्वितीयक्षण एव अव्यवहितत्वपर्य्यवसानात् यत्र अविरलक्रमेण सिद्धिसिषाधयिषानुमितयस्तत्र द्वितीयक्षणे पक्षतासम्पत्तये द्वितीयसिषाधयिषाविरहो विशेषणमस्तु सिद्धेः प्राथमिकस्तु स्वक्षणस्य किमर्थमिति चेत् यत्र क्रमेण सिषाधयिषाप्रात्यक्षिकसिद्धिपरामर्शानुमितयस्तत्र तृतीयक्षणे पक्षतासम्पत्त्यर्थमिति तन्न यत्र अनुमित्सानाशकाले प्रात्यक्षिकी सिद्धिरथ च परामर्शानुमिती तत्र पक्षताविरहप्रसङ्गात् अथ प्रथमक्षणमपेक्ष्य द्वितीयस्येव द्वितीयमपेक्ष्य तृतीयस्य अपि अव्यवहितोत्तरत्वं स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वं वा तादृशाव्यवहितोत्तरत्वं वाच्यं तथाच यत्र क्रमेण सिद्धिसिषाधयिषानुमितयस्तत्र प्रथमक्षणे पक्षतावारणाय उत्तरक्षणस्य विशेषणं प्रथमं विशिष्टान्तं द्वितीयन्तु सिद्धेस्तत्रैव द्वितीयक्षणे पक्षतासम्पत्तये यदि पुनरिच्छाजनिका सामग्री प्रतिबध्नाति अनुमितिं तदानुमित्यव्यवहितपूर्ववर्त्तिसिद्धिभिन्नसिद्ध्यभाविमात्रं पक्षतेति चेत् तादृशसिद्धीनां तत्तद्व्यक्तित्वेन अभावः कारणं निरुक्तरूपविशिष्टत्वेन वा नाद्यः अनन्तकार्य्यकारणभावप्रसङ्गात् तादृशसकलसिद्धौ अनुमित्साविरहविशेषणदानस्य वैयर्थ्यात् तत्तत्समयसम्बन्धव्यक्तीनां तत्तत्समयावच्छिन्नतत्तत्संयोगादीनां वा प्रतिबन्धकत्वप्रसङ्गाच्च नान्त्यः सत्यपि परामर्शादौ कस्याश्चित्सिद्धेरनन्तरमनुमितिः कस्याश्चिन्नेत्यत्र नियामकाभावात् न वा कारणतावच्छेदकावच्छिन्नसमाजाधीनकार्य्योत्पादादिकं कारणतावच्छेदककोटौ निविशते तथा

सति उत्पत्तिकालावच्छिन्नत्वविशेषितेन स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिकसविषयत्वेन स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणोत्पन्नसविषयत्वेन स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिकभिन्नसविषयत्वेन वा किं वा स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवर्त्तित्वविशिष्टज्ञानत्वादिना कारणत्वं स्यात् अव्यवहितोत्तरस्व द्वितीय एव क्षण इति न अतिप्रसङ्गः न च आदिमेषु परामर्शस्थितिक्षणे यत्र विरोधिसिद्ध्यादिविनाशस्तत्र उत्तरक्षणेऽनुमितिर्न स्यात् परामर्शस्य अतथात्वात् इति वाच्यम् अनुमितिसामग्र्या विरोधिन्या विरहेण तदानीम् उत्पन्नादनुव्यवसायादेरन्ततः संस्कारात् वा तत् सम्भवात् संस्कारजन्यत्वेन स्मृतित्वस्य प्रागेव निरासात् स्यात् वा स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवृत्तिभिन्नत्वेन स्वसमानाधिकरणानुमित्यव्यवहितपूर्वत्वानधिकरणक्षणवृत्तित्वविशिष्टत्वेन वा स्वसमानाधिकरणानुमित्युत्पत्त्यनधिकरणसमयाव्यवहितपूर्वक्षणवृत्तित्वविशिष्टत्वेन वा प्रतिबन्धकत्वं तदव्यवहितपूर्वत्वञ्च तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वम्। न चात्र प्रथमे यत्र सिद्ध्यात्मकपरामर्शानन्तरं सिषाधयिषाया उत्पत्तिकाले तत्पुरुषीयस्य कस्यापि धर्मस्य न विनाशोऽनन्तरं पुनरनुमितिः तत्र तदुत्पत्तिसमयेऽपि सा स्यात् तत्पूर्वकालीनानां सर्वेषां तादृशपूर्ववर्त्तित्वेन अविरोधित्वादिति वाच्यम् अनवरतपरिस्पन्दमानापरिमितपवनादिपरमाणुचेतनसंयोगसन्तानान्तःपातिव्यक्तीनामविरतमेवोपरमात् फलानुत्पादबलेनापि तादृशकल्पनासम्भवात् कारणान्तरकल्पने गौरवाच्च अन्वयव्यभिचारसन्देहस्य च कारणत्वग्रहाविरोधित्वात् उपादीयन्तां वा तत्तदात्मसमयविशेषसम्बन्धा एव तादृशपूर्ववर्त्तिभिन्नाः भवेद्वा

तत्तत्पुरुषीयानुमितिं प्रति तत्तदीयानुमित्यव्यवहितपूर्वक्षणत्वादिना तादृशक्षणवर्त्तित्वविशिष्टत्वादिना वा कारणत्वं तथाच उपमानादेः प्रमाणान्तरत्वं भज्येत सर्वत्र अनुमितिसामग्रीसम्भवात् विलीयेत च परामर्शत्वादिना कारणत्वं बाधकत्वादिना च प्रतिबन्धकत्वम् अनयैव रीत्या कार्य्यान्तरेष्वपि क्लृप्तानां कारणानां प्रतिबन्धकानाञ्च अतथात्वमक्लृप्तानाञ्च तथात्वं प्रसज्येत अतएव न द्वितीयोऽपि प्रकारः वैयर्थ्याच्च सिद्धेः। सिषाधयिषाविरहविशिष्टस्य सिद्ध्यनुमानातिरिक्तसाधकमानयोरन्यतरस्याभावः कारणमिति तु केचित्तन्न साधकमानं हि सिद्धिस्वरूपयोग्यं तदुपहितं तत्सामग्री वा नाद्यः चक्षुरादिसत्त्वे विनानुमितीच्छामनुमित्यभावप्रसङ्गात् न द्वितीयः सिद्धेः पूर्वं तदुपहितत्वाभावेन प्रत्यक्षसामग्रीसत्त्वेऽप्यनुमित्यापत्तेः अनुमानातिरिक्तेत्यस्य वैयर्थ्याच्च न तृतीयः अनुमितिसामग्र्यभावत्वेन प्रत्यक्षकारणत्वम् अनुमित्सा विरहविशिष्टप्रत्यक्षसामग्र्यभावत्वेन चानुमितिकारणत्वमित्यन्योऽन्याश्रयात् स्थाणुत्वाभावव्याप्यदर्शनक्षणे प्रतियोग्यारोपविरहेणाभावप्रत्यक्षसामग्रीविरहात् पक्षतासत्त्वे स्थाणुत्वारोपक्षणे तदभावानुमित्यापत्तेरित्यपि कश्चित् वस्तुतस्तु स्वतन्त्रान्वयव्यतिरेकशालित्वान्नियमेन प्रथमसुपस्थितत्वाल्लाघवात् च प्रत्येकमेव तथात्वमन्यथा बाधादेरपि अत्रैवान्तर्भावप्रसङ्गात् न चानुमित्साविरहस्य प्रत्येकं विशेषणत्वे गौरवं शाब्दसिद्धौ सत्यामशाब्दं ज्ञानं जायतामितीच्छायामनुमितेरुत्पादात् सिद्धावनुमितिविषयेच्छाविरहस्य प्रत्यक्षसामग्रीसत्त्वे च तादृशेच्छायामप्यनुमित्यनुत्पादात् साधकमाने अनुमितित्वादिप्रकारकेच्छादिविरहस्य पृथगेव विशेषणतायास्त्वयापि वाच्यत्वात् स्वनिवर्त्तकप्रत्यक्षादिसामग्रीसमवहि-

तान्यत्वादिना च ताद्दशेच्छयोरनुगमेऽतीव गौरवम् अन्यतरत्वघटकयोरन्योऽन्याभावयोर्मिथोविशेषणविशेष्यभावे विनिगमकाभावश्च आत्मनिष्ठस्य समवायेन सिद्धेरभावः भिन्नाभिन्नेन च सम्बन्धेन तत्तदसाधारणकारणरूपायास्तत्सामग्र्याः मणिविशिष्टस्य वह्नेरिव इतरेतरविशिष्टस्य मनोयोगादेः प्रतिबन्धकत्वायोगात् तथा च कथमनुगतरूपेण तयोरभावः कारणम् एवं सिद्धेः सिषाधयिषाविरहेण वैशिष्ट्यमेककालावच्छेदेनैकात्मवृत्तित्वं प्रत्यक्षादिकारणचक्षुः संयोगादेस्त्वन्याद्दशमितिसामग्रीविशेषाभावस्य हेतुत्वेऽपि लाघवात् सिद्ध्यभाव एव पक्षव्यवहारनिमित्तम् एतदेवाभिसन्धाय प्रवृत्तिनिमित्तमुक्तमिति वक्ष्यति फलानुपहितसिद्धीच्छाविरहविशिष्टसिद्ध्यभावापेक्षया बाधाभावस्य लघुत्वेऽपि सिद्धसाधनस्थलपक्षव्यवहारविरहेण ताद्दशसिद्ध्यभावस्यावश्यकत्वे बाधाभावो न निविशते गौरवात् विशिष्टसिद्ध्यभावस्य चात्मनिष्ठस्यैवानुमितिहेतुत्वेऽपि तस्य परम्परासम्बन्धादेव पर्वतादौ पक्षव्यवहार इति ध्येयम् एकस्य पुंसोऽनुमित्सासत्त्वेऽपि अन्यस्य तद्विरहिणः प्रत्यक्षादिसामग्रीसत्त्वेऽनुमित्यनुत्पादात् तत्पुरुषीयानुमितिं प्रति तत्तत्पुरुषीयानुमित्साविरहकालीनतत्तत्पुरुषीयसिद्धिसामग्रीविशेषविरहोऽनन्यगतिकत्वेन हेतुरूपेतव्य इति वदन्ति। अथ सिद्ध्युत्तरानुमितौ सिषाधयिषा हेतुरस्तु नचैवं मण्यादिस्थलीयदाहं प्रति उत्तेजकस्य हेतुत्वापत्तिः उत्तेजकानामननुगतत्वात् तावदभावविशिष्टमण्याद्यभावस्य चानुगतत्वादिति चेत् इहापि दर्शितोऽननुगमः सिषाधयिषायाः सिद्ध्युत्तरानुमितित्वञ्च अनुगतानतिप्रसक्तं दुर्वचं सिद्धिस्थितिकालीनां स्वेतरसिद्धिकालीनां वानुमितिं प्रति हेतुत्वकल्पने च विनापि सिषाधयिषां सिद्धिनाशकालेऽनुमित्युत्पादो दुर्वारः एकस्य च पुंसः सिद्धि-

सत्त्वेऽन्यस्य सिषाधयिषाशून्यस्यानुमित्यनुत्पादप्रसङ्गः तत्तत्-पुरुषीयतादृशानुमितिं प्रति सिषाधयिषाया हेतुत्वेऽनन्तकार्य्य-कारणभावप्रसङ्गः अपि च सिद्धौ सत्यां विनापि सिषाधयिषां सामान्यसामग्रीतोऽनुमितिसामान्योत्पत्तिप्रसङ्गात् न हि ईदृशविशेषसामग्रीं विना सामान्यसामग्र्या अनुमितिजनकत्वं नास्ति न चान्यत्रापि तद्विशेषसामग्र्यन्तरमस्तीति तत्कल्पने चातिगौरवम् इह जायमाना सा सिद्ध्युत्तरैव स्यात् सा च न जायते कारणाभावादिति चेत् समाजनिष्ठानुमितिसामा-न्यन्तु स्यादेव कार्य्योत्पादविरहस्य विना कारणभावमस-म्भवात् करणव्यापारत्वेनावश्यककारणभावस्य परामर्शस्य कारणतावच्छेदिका पक्षता न कारणमिति तु भ्रमः प्रति-बन्धकान्तराभाववदन्वयव्यतिरेकशालित्वेन हेतुत्वात् अन्यथा यथासम्भवनिमित्तकारणस्य समवायिकारणत्वाद्यवच्छेद-कत्वप्रसङ्गात् अथानुमितिसाधारणसिद्धेः प्रतिबन्धकत्वे तदभावस्य मण्याद्यभाववत् प्रतिबन्धकाभावत्वेन कार्य्य-कालवृत्तेरेव हेतुत्वात् अनुमितिकाले च तदसम्भवात् सा न उत्पद्येतेति चेत् ? न यस्य मण्याद्यभावादेः कार्य्यसमकाल-तया अन्वयव्यतिरेकित्वं तस्यैव तथात्वेन हेतुत्वं न तु सर्वस्य गौरवात् अन्यथा समवायिकारणस्य कार्य्यसहभूतस्यैव हेतु-त्वात् तु कारणमात्रस्य तथात्वप्रसक्तौ प्राभाकरा एव विजयि-नन्निति। प्राभाकरास्तु विनापि अनुमित्सां क्वचित् परामर्शा-नुमितिप्रवाहस्य अविरललग्नस्यानुभविकत्वात् कालभेदकल्प-नायाश्च मानाभावात् मानाभावाच्च पक्षता नानुमितिहेतुः परार्थानुमाने तु सिद्धसाधनमर्थान्तरविधया दूषणमित्याहुः ।

इति श्रीरघुनाथशिरोमणिभट्टाचार्य्यकृता पक्षता-टीका समाप्ता ।

# अथ श्रीजगदीशभट्टाचार्य्यकृता शिरोमणि-टीकायाः विवृतिः।

अनुमितिलक्षणेति। अनुमितिस्वरूपेत्यर्थः। व्याप्तिज्ञानजन्यायाः अनुमितेः किमन्यत्कारणमिति जिज्ञासयैव पक्षतानिरूपणादिति भावः। अत्रानुकूलत्वं जनकजनकतावच्छेदकसाधारणप्रयोजकत्वमात्रं तेन व्याप्तेरनुमित्यहेतुत्वेऽपि न क्षतिः। यत्तु जनकतावच्छेदकत्वमेवात्रानुकूलत्वं व्याप्तिवत्पक्षताया अपि करणव्यापारतयासिद्धहेतुभावस्य परामर्शस्य जनकतायामवच्छेदकत्वादिति मतं तत्तुच्छम्। पक्षता न कारणमिति तु भ्रम इत्याद्युत्तरग्रन्थविरोधापत्तेः। पक्षधर्मतामिति। पक्षे धर्मत्वं यस्या इति व्युत्पत्त्या पक्षतामित्यर्थः पक्षस्य धर्मत्वं धर्मविशेषः पक्षत्वमिति वा देवतादि शब्द इव तलः स्वार्थिकत्वात् व्याप्नोतीति। न च प्रकृतग्रन्थस्वरसंवलितस्यैव पाठस्य धर्त्तुमुचितत्वाद्व्याप्त्येत्येव धारणं युक्तमिति वाच्यम्? अप्रयोजकत्वात् व्याप्तिनिरूपणान्तरमित्येवं मूलपाठमनुसृत्य वा तथोपन्यासादिति भावः। ननु सन्दिग्धसाध्यधर्मत्वमिति मूलस्य यदि सन्देहविषयीभूतसाध्यवत्त्वमर्थस्तदा विनष्टवह्न्यादेर्ज्ञानादावनुमिति न स्यात् तत्र तादृशसाध्याभावेन पक्षताविरहादतः साध्यसंशयस्यैव पक्षतात्वमाह यत्रेत्यादिना। यद्धर्मिकयत्सम्बन्धावच्छिन्नयत्प्रकारकनिश्चयत्वेन यत् संशयं प्रति निवर्त्तकत्वं स सन्देहस्तत्पक्षकतत्सम्बन्धावच्छिन्नतद्विधेयेकानुमितौ हेतुभूता पक्षतेत्यर्थः। तेन वह्निधर्मिकघटादिनिर्णयात्मकस्य पक्षधर्मिकवह्निमत्त्वनिश्चयस्य निवर्त्तनीयोऽपि, वह्नौ घटादिसन्देहो न पर्वतपक्षकवह्न्यनुमितौ पक्षता तत्र वह्निमत्त्वनिश्चयत्वेन

अप्रतिबन्धकत्वादिति भावः। अत्र निश्चयत्वावच्छिन्नत्वञ्च निश्चयत्वव्यापकत्वेन तु स्वरूपसम्बन्धरूपं तेन प्रमेयवह्निसाध्यके प्रमेयवह्निमानवह्न्यभाववान् वा इत्यादि संग्रहः। अत्र पक्षधर्मिकसाध्यवत्तानिश्चयनिवर्त्तनीयत्वमात्रं बाधनिश्चयेऽतिव्याप्तमतः संशयपदं न च बाधनिर्णयस्य पक्षतात्वे अपि न क्षतिः विशिष्टबुद्धिसामान्यं प्रति एव बाधनिश्चयस्य विरोधित्वादेव तत्रानुमित्यसम्भवादिति वाच्यं सन्दिग्धाप्रामाण्यकबाधनिश्चयसत्त्वे सिद्ध्यात्मकादपि परामर्शादनुमित्यापत्तेः तादृशबाधनिश्चयस्य विशिष्टबुद्ध्यप्रतिबन्धकत्वात्। यद्यपि निर्वह्निः पर्वतो रूपवान्नवेत्यादि सन्देहात्मकस्य बाधनिश्चयस्य पर्वतधर्मिकवह्निमत्तानिश्चयनिवर्त्यत्वं संशयत्वं चास्तीति वह्निसाध्यकपक्षतालक्षणस्य तत्रातिव्याप्तिः पक्षे साध्यसंशयत्वोक्तौ च न अनुगमवार्त्तापि तथापि संशयत्वमत्र तादृशनिश्चयाप्रतिबन्धकत्वं तथा च पक्षधर्मिकसाध्यवत्तानिश्चयनिवर्त्यत्वे सति तादृशनिश्चयप्रतिबन्धकतावच्छेदकविषयिताशून्यज्ञानत्वं फलितार्थः। तेन गृहीताप्रामाण्यकबाधनिश्चयस्य पक्षधर्मिकसाध्यवत्त्वज्ञाननिवर्त्तकत्वाभावेऽपि तन्निवर्त्तकतावच्छेदकविषयिताकत्वादेव अतिव्याप्तिव्युदासः यद्यपि चैवमपि वह्निव्याप्यसाध्यकानुमितौ पर्वतो वह्निमान् न वा इति संशयः पक्षता स्यात्। तस्यापि पक्षधर्मिकवह्निव्याप्यवत्त्वरूपसाध्यनिर्णयनिवर्त्यत्वात् तादृशनिश्चयाप्रतिबन्धकत्वाच्च न चेष्टापत्तिः पर्वतो वह्निवान्नवेति संशयोत्तरं पर्वतो वह्निव्याप्यवानित्येवं साध्यनिर्णयेऽपि वह्निव्याप्यसाध्यकानुमित्यापत्तेः तथापि प्रकृतपक्षविषयितावच्छिन्नभूतसाध्यविषयिताघटितधर्मावच्छिन्नं यत् प्रकृतपक्षधर्मिकप्रकृतसाध्यवत्तानिश्चयनिवर्त्यत्वं तन्निवेशितत्वमित्यदोषः। पर्वतो वह्निमान्नवेति संशयस्य च वह्नि-

व्याप्यवत्तानिश्चयनिवर्त्त्यत्वेऽपि तादृशनिवर्त्त्यतायाः पर्वतधर्मि-कवह्न्यभावप्रकारत्वेनैव अवच्छेद्यतया वह्निव्याप्यवत्त्वरूपसाध्य-वत्त्वविषयितानवच्छेद्यत्वात् न च तथापि वह्निर्भूतान्तदलं व्यर्थमिति वाच्यं ? वह्निव्याप्यवत् सधर्मापर्वतो वह्निमान्नवेति संशयस्य तादृशपर्वतत्वावच्छिन्नपक्षकवह्निव्याप्यसाध्यकानुमितौ पक्षतात्वव्युदासकत्वात्। वस्तुतस्तु पक्षविषयितावह्निर्भूतत्वा-द्यपहाय साध्याभावत्वावच्छिन्नप्रकारित्वसाध्यविशेष्यकत्वान्यत-रावच्छिन्नमेव साध्यनिश्चयनिवर्त्त्यत्वं वाच्यं तेन वह्नौ पक्षे वह्नेः साध्यतायां वह्निर्वह्निमान्नवेति संशयस्य पक्षविषयितावह्निर्भा-वेण साध्यविषयित्वाप्रसिद्धावपि न तत्र अव्याप्तिः न चैवं ह्रदादौ वह्न्यभावस्य अनुमाने ह्रदो वह्निमान्नवेति संशयः पक्षता न स्यात् तन्निष्ठायाः साध्यवत्तानिश्चयप्रतिबध्यताया वह्निमत्ता-विषयकत्वेनैव अवच्छेद्यतया साध्याभावत्वावच्छिन्नप्रकारित्वा-नवच्छेद्यत्वमिति वाच्यम् ? इष्टत्वात् ह्रदो वह्न्यभाववान् नवे-त्याकारकसंशयस्यैव पक्षतात्वात् साध्यपक्षभेदेन पक्षताया नानात्वाद् व्याप्यवत्तासाध्यपक्षतालक्षण एव साध्यविषयित्वघ-टितधर्मावच्छिन्नप्रतिबध्यतायाः प्रवेश्यत्वादिति वदन्ति। वह्नि-व्याप्ये वह्निव्याप्यस्य साध्यतायां वह्निव्याप्योऽवह्निव्याप्यवान्नवेति संशयस्य पक्षतात्वाहऽन्यापत्तेः तादृशनिष्ठायास्तादृशपक्ष-धर्मिकतादृशसाध्यवत्तानिश्चयनिवर्त्त्यतायाः पक्षीभूतसाध्य-विशेष्यकत्वावच्छेद्यत्वादिति ध्येयम्। केचित्तु संशयत्वमत्र प्रकृत-पक्षविषयितानिरूपितप्रकृतसाध्यनिष्ठविषयिताकत्वमतो वह्नि-व्याप्यसाध्यकानुमितौ वह्निमत्त्वसंशयस्य निर्वह्नित्वसाध्यका-नुमितौ च महानसीयवह्निमत्त्वसंशयस्य न पक्षतात्वं तस्य तादृशसाध्यपक्षोभयवैशिष्ट्यावगाहित्वाभावात् एवं च पक्ष-धर्मिकसाध्यवत्ताऽनिश्चयस्यापि तादृशत्वात् तद्वारणाय निवर्त्त्य-

न्वमित्याहुस्तत् न साध्यं पक्षवृत्ति नवा साध्यं पक्षनिष्ठाभावप्रतियोगि नवेत्यादिसन्देहस्यापि लक्ष्यतया तत्राव्याप्यत्वात् तेषां पक्षसाध्योभयवैशिष्ट्यानवगाहित्वात् पर्वतो वह्निव्याप्यवानित्येवं साध्यनिश्चयनिवर्त्तनीयस्य पर्वतो निर्वह्निवह्निव्याप्यस्तु पर्वतवान्नवेति समूहालम्बनस्य वह्निव्याप्यसाध्यकानुमितौ पक्षतात्वप्रसङ्गात् च तस्य अपि वह्निव्याप्यात्मकसाध्यपक्षोभयवैशिष्ट्यावगाहित्वात् आधेयत्वसम्बन्धावच्छिन्नसाध्य(पक्ष)विशेषयतायाः प्रवेशे तु पक्षः साध्यवान्नवेत्यादि संशयस्यासंग्रहापत्तेरिति दिक्। यत्तु साध्यवत्तानिश्चयनिवर्त्यसंशयत्वमित्यत्र संशयत्वं साध्याभावनिश्चयनिवर्त्त्यत्वरूपं सर्वत्र ग्राह्यम् अतो न उक्तदोषाणाम् अवकाश इति, तत् तुच्छं, पर्वतत्वावच्छेदेन वह्नेः साध्यवत्तास्थले वह्न्यभाववत् पर्वतसधर्म्मा वह्निमत् पर्वतो द्रव्यं न वेति संशयस्य पक्षतात्वापत्तेः तादृशसंशयस्य पर्वतत्वावच्छेदेन वह्निनिश्चयस्य तदवच्छेदेन वह्न्यभावनिश्चयस्य अपि प्रतिबध्यत्वादिति दिक् इदन्तु चिन्त्यते अन्यत्र अस्तु यथा तथापि वह्निव्याप्यवति वह्नेः साध्यतास्थले तद्धर्मिकतादृशनिश्चयप्रतिबध्यस्य संशयस्य अप्रसिद्धा कुत्र लक्षणं नेयं वह्निव्याप्यवान् वह्निमान्नवेत्यादिसंशयस्य आहार्य्यत्वेन अप्रतिबध्यत्वादिति। ननु पक्षधर्मिकसाध्यसंशयत्वं साध्यधर्मिकपक्षवृत्तित्वसंशयत्वादिकं वा लघुलक्षणं कुतः परित्यक्तमत आह तेनेति। यादृशसम्बन्धावगाहित्वस्य फलमाह न वेति मूलस्य साध्यधर्मत्वमित्यस्य परित्यागे बीजमाह न वा तत्र इत्यादि। सन्दिग्धसाध्यधर्मत्वमिति मूलस्य सन्दिग्धं साध्ये धर्मत्वं यस्येति व्युत्पत्त्या यद्वृत्तित्वं साध्ये सन्दिग्धमिति यावत्। किंवा सन्दिग्धः साध्यरूपो धर्मो यत्रेति व्युत्पत्त्या यथाश्रुतोऽर्थः तत्र प्रथमे पक्षीं-

भूततमःसमवेतस्य द्वितीये च धर्मात्मकगगनसाध्यस्य अप्रसिद्धया इदमपि लक्षणं दुष्टमित्याशयेन तमसः पक्षतया गगनस्य साध्यतया उल्लेखः। अत्र च मते पक्षे साध्यवत्तासंशयोत्तरं सिद्ध्यात्मकपरामर्शादप्यनुमितिः भवति एवेति बोध्यम्। न च उक्तलक्षणस्य साध्यसंशयमात्रपरत्वे अग्रिमसूलेन तस्य विशेषणत्वादिविकल्पस्य असङ्गतिः तत्र विशेषणोपलक्षणपदयोः साक्षात् परम्पराकारणपरत्वात्। सन्दिग्धं साध्यं यत्र तद्धर्मत्वं तत्सम्बन्धित्वमिति व्युत्पत्त्या लब्धं स्वविशेष्यकसाध्यसंशयसम्बन्धित्वरूपं यथाश्रुतार्थमादायैव विशेषणत्वोपलक्षणत्वयोरग्रे विकल्प इत्यपि आहुः। तदैकल्यम् पक्षतावैकल्यम्। ननु योग्यातायाश्चानिरूपणादिति ग्रन्थेन अग्रे अनुमित्याया इव संशयस्यापि योग्यताया निरसितुमुचितत्वात् तदनिरसनात् मूलस्य न्यूनत्वम् अत आह संशयेति। सिद्धिबाधयोर्जनकस्य व्याप्तिज्ञान मनोयोगादेः सर्वत्रैव अनुमितेः पूर्वं सत्त्वाद्व्याचष्टे साधकेत्यादि। तथाच साधकेन बाधकेन च जनितं यन्मानमिति मूलेऽन्वयः। स्वार्थे वा कद्दयमिति भावः। ननु पक्षधर्मिकसाध्याभावनिश्चयात्मनो बाधस्य केवलान्वयिनि अप्रसिद्धिरत आह केवलान्वयिनि चेति। पर्वतो न वाच्यत्ववानित्याकारकः पटाद्यभावे प्रतियोगितासम्बन्धेन वाच्यत्वाद्यवगाह्यपि बाधः खण्डशः प्रसिद्ध्या तत्र सम्भवति इति आवेदयितुं सुलभ इत्युक्तम् न चैवं नानाविधानां बाधबुद्धीनामनुगमासम्भवः प्रातिस्विकरूपेण तासां निवेशे तु नापि अभाव इयमिति मूलासङ्गतिर्बाधाभावस्यानेकत्वादिति वाच्यं पक्षधर्मिकसाध्यवत्ताज्ञानविरोधिनिर्णयत्वेन तासामनुगमादिति भावः मूले प्रत्यक्षपरिकलितमिति प्रत्यक्षपरिकलितत्वविशिष्टविषयको यो ऽनुमानजन्यो बोधस्तदिच्छावन्त इत्यर्थः तेन उपजातप्रत्यक्ष-

विषयत्वदशायाम् एव अनुमितिविषयत्वलाभात् न वचनयोः विरोधस्य असङ्गतिरिति ध्येयम्। तत्रापीति अनुमित्सानाश-स्थलेऽपि पुनरिति उत्पन्नपरामर्शानन्तरमित्यर्थः। ननु पुन-रनुमित्सार्थमनुमितीष्टसाधनताज्ञानस्य पूर्वमपेक्षणात्तेनैव प्राक्तनपरामर्शनाशात् कुतस्तत्रानुमितिः स्यादत आह ततः परामर्शान्तरमिति। ततोऽनुमितिरित्यग्रेण अन्वयः इष्टसाध-नताज्ञानपरामर्शयोः पृथक्कल्पने गौरवादाह स्मरणात्मकेति। विशिष्टानुभवं प्रत्येव विशेषणज्ञानस्य साक्षाद्धेतुतया तादृश-विशिष्टपरामर्शार्थं विशेषणज्ञानकल्पने गौरवमपि नास्तीत्या-वेदयितुं स्मरणात्मकाद्वेत्युक्तम्। न च उक्तपरामर्शानन्तर-मनुमित्सादशायामनुमितिप्रसङ्गः सामग्रीसत्त्वादिति वाच्यं ? सिषाधयिषारूपायाः पक्षतायाः प्रागसत्त्वादिच्छासामग्र्या एव प्रतिबन्धकत्वाच्चेति भावः। कल्पनीयमिति न चैतावतापि प्रत्यक्षादिभिन्नं वह्निज्ञानं जायतां वह्न्यनुमितिर्जायतामि-त्यादिरूपाणामनुमित्साव्यक्तीनामनुगतरूपविरहात् कारणत्वा-सम्भव इति वाच्यम् ? यद्यनुमित्सासत्त्व एव यत्पक्षकयत्साध्य-कानुमितिस्तदनुमित्साविरहकूटत्वावच्छिन्नाभावत्वेनैव तत्-पक्षकतत्साध्यकानुमितावनुमित्साया हेतुत्वसम्भवादिति भावः। यत्तु यत् पक्षकयत्साध्यकानुमितिनिरूप्याऽनुमित्सात्वेनैव तत्-पक्षकतत्साध्यकानुमितौ हेतुत्ववाच्यमिति तत् न, तादृशानु-मितित्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्योक्तौ अशा-ब्दज्ञानं जायतामित्याकारानुमित्साया असंग्रहापत्तेः तस्या-मशाब्दज्ञानत्वेन एव प्रतिबन्धकत्वात् प्रकृतपक्षसाध्यकानु-मितिनिष्ठप्रतिबन्धकतामात्रस्योक्तौ च समूहालम्बनतादृशानु-मितिप्रतिबध्यतामादाय घटानुमित्सायामतिव्याप्त्यापत्तेरिति ध्येयम्। मिश्रमतमाशङ्क्य निषेधयति न चेति वाच्यमित्यग्रेण

अन्वयः। अनुमितिजनिकेति तत् पुरुषीयतत्पक्षकतत्साध्य-कानुमितौ तादृशानुमितिजनिकेच्छैव पक्षतेत्यर्थः। विषयि-तया धात्वर्थान्वयिन एव सनःमसानकर्तृकत्वस्य तन्त्रत्वादिति भावः। सुलभेति तथाच घनगर्जिताद्यनुमितौ न व्यभि-चार इति भावः। तस्या ईश्वरेच्छायाः तदानीं सिद्धिदशायां न तज्जनकत्वं न तादृशानुमितिजनकत्वं तद्धि तादृशानु-मितिजनकत्वं हि अनपायात् स्वरूपतः सत्त्वात्। न च तत्-पुरुषीयतादृशानुमितिं प्रति तत्पुरुषीयतादृशानुमित्यव्यव-हितप्राक्क्षणवृत्तित्वविशिष्टेच्छात्वेन हेतुत्वात् तदानीं स्वरूप-योग्यत्वमेव नास्तीति वाच्यं कार्य्याव्यवहितपूर्ववर्त्तित्वादिना हेतुत्वस्याग्रे सार्वभौमनिरुक्तौ निरस्यत्वादिति भावः। तदु-पधानं तादृशानुमितिविशिष्टत्वं तदभावादिति तथाच अस-त्यामपि सिद्धौ अनुमितिर्न स्यात् प्रत्युत एकानुमित्यनन्तरमेवा-नुमित्यन्तरं स्यादिति भावः। तत्सामग्रीति तत्पुरुषीयतत्पक्ष-कतत्साध्यकानुमितिसामग्रीविशिष्टत्वमेव तादृशानुमितिजन-कत्वमित्यर्थः। प्रसङ्गादिति तथाच परामर्शादिकं हेतु र्न स्यात् अवच्छेदकत्वादिति भावः। इष्टापत्तौ बाधकमाह शेषेति। तादृशानुमितिसामग्रीविशिष्टत्वेनैव हेतुत्वसम्भवादिच्छाभा-गस्य वैयर्थ्यादित्यर्थः। नचात्र सामग्रीपदेन इच्छेतरकारण-स्तोम एव धर्त्तव्यस्तथाच सिद्धिकालीनपरामर्शस्यापि तादृश-स्तोमविशिष्टत्वादिति ततोऽनुमिते र्वारणार्थमेव इच्छाभागः प्रवेशनीयः इति वाच्यं सिद्धिदशायामिच्छा अन्यस्यानुमिति-कारणस्तोमस्यासत्त्वात् अन्यथा तादृशकारणस्तोमविशिष्टाया भगवदिच्छायास्तदानीमपि सत्त्वादिच्छानिवेशेऽपि तत्रानुमिते-र्दुर्वारतापत्तेः घनगर्जिताद्यनुरोधेन तादृशेच्छायाः सामानाधि-करण्यप्रत्यासत्त्याहेतुत्वासम्भवादिति भावः। ननु इच्छाभागो

न देयः तादृशानुमितिसामग्रीविशिष्टत्वेनैव हेतुत्वं वाच्यं तथैवानुमित्सायाः सर्वत्र हेतुत्वसम्भवादित्यत आह तदानीमिति। सिषाधयिषायां यत्कारणाभावप्रयुक्तः सामग्रीविरहः तत्कारणस्येत्यर्थः। वक्तव्यतापातादिति तथा चावश्यकत्वात् सैव पक्षतेति भावः। ननु क्रमोत्पन्नानां सिद्धीच्छापरामर्शानां युगपदसत्त्वात् सहकृतां तदलं व्यर्थमत आह यत्रेति। पक्षस्मरणमिति तदनन्तरं चानुमितिरित्यग्रेऽन्वयः। विशिष्टानुभवं प्रत्येव विशेषणज्ञानस्य हेतुत्वात् तदपेक्ष्य गौरवन्नास्तीत्याशयेन स्मरणपर्य्यन्तानुधावनम्। अत्रानुमित्सार्थमनुमितीष्टसाधनताज्ञानानन्तरं कल्प्यमतो लाघवादाह अनुमितीत्यादि। तादृशस्मरणादिति साध्यतद्व्याप्यविशिष्टपक्षस्मरणादित्यर्थः। अनुमित्सेति तदनन्तरं चानुमितिरित्यग्रेणान्वयः। स्मृत्यात्मकसिद्धौ सहकृतान्तविशेषणस्य प्रयोजनमुक्ता अनुभवात्मकसिद्धौ तदाह पूर्वकालेत्यादिना। ज्ञानेच्छयोरयौगपद्यादनुमित्साजन्मक्षणे विशेषणस्मरणस्यासम्भवादुत्तरक्षणे तत्स्मरणे तु परामर्शदशायामनुमित्सानाशात् तत्र पक्षतैव न उपैयते इत्यत उक्तं पूर्वकालोत्पन्नेति। अनुमित्सापूर्वकालोत्पन्नेत्यर्थः अनुमित्सायाः पूर्वपक्षसन्निकर्षेऽनुमित्सामवधूय वह्न्यादि साध्यकतद्व्याप्यवत्त्वेन पर्वतादेः प्रत्यक्षमेव स्याद्वह्निविषयकालौकिकप्रत्यक्षसामग्र्याः सर्वतो बलवत्त्वादनुमित्सानन्तरसन्निकर्षे च परामर्शदशायां न अनुमित्सायाः सत्त्वमत उक्तमनुमित्साकालेति। इदमुपलक्षणं यत्र अनुमितीष्टसाधनताविषयकस्य साध्यतद्व्याप्यविशिष्टपक्षप्रत्यक्षस्य अनन्तरमनुमित्सा तत्रापि पक्षतासम्पत्त्यर्थं सहकृतान्तं बोध्यं पक्षतासम्पत्तय इति। न च अनुमित्सादशायामपि घटाद्यवच्छेदेन तदभावस्यात्मनि सत्त्वात् पक्षताभङ्गप्रसङ्गः देशानवच्छिन्नविशेषणतयैव सामानाधिकरण्यरूपस्य अनुमित्साविरह-

वैशिष्ट्यस्योक्तत्वादिति भावः। ननु सिद्धिगोचरेच्छामात्रस्य सिषाधयिषात्वे द्रव्यत्वेन द्रव्यज्ञानं जायतामितीच्छायामपि सिद्ध्यात्मकपरामर्शाद्वह्न्यनुमितिः स्यादत आह सिषाधयिषेति। तत्साध्येति प्रकृतसाध्यविधेयतानिरूपितप्रकृतपक्षविषयिताकत्वप्रकारिकेत्यर्थः तेन वह्निविशिष्टह्रदाद्यप्रसिद्धावपि ह्रदो वह्निमान् इत्याद्यनुमितौ न पक्षताहानिः न वा पाषाणमयत्वेन पर्वते तेजस्त्वेन वह्न्यनुमितिर्जायतामितीच्छायामपि सिद्धिदशायां पर्वतो वह्निमानित्यनुमितिस्तदिच्छायाः पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नाधेयताद्यनवगाहित्वादिति भावः। वह्निमत्त्वेन पर्वतस्य प्रत्यक्षं जायतामितीच्छावारणार्थमाह अनुमितिविषयिणीति। यत्किञ्चिदिति द्रव्यत्वेन द्रव्यगोचरज्ञानं जायतामितीच्छायामपि वह्नेः सिद्ध्यात्मकपरामर्शादनुमित्यनुत्पादादित्यर्थः। तेन ज्ञानं जायतामितीच्छोत्तरं सिद्ध्युत्पादे वक्ष्यमाणस्वविषयसिद्ध्यनुपहितत्वविशेषणादेव तदिच्छावारणं सिद्ध्युत्तरं च तादृशेच्छा न भवत्येव ज्ञानमात्रस्यैव ज्ञानत्वप्रकारिकेच्छाविरोधित्वादिति प्रत्युक्तम्। ननु अनुमितिविषयत्वेन अनुमित्साव्यक्तीनां प्रवेशे गौरवादनुमितित्वप्रकारिकेच्छैव प्रवेश्यतामत आह अनुमितित्वेति। सिद्ध्यात्मकपरामर्शोत्तरं पर्वते वह्निज्ञानं जायतामितीच्छैव नोत्पद्यते सिद्धिविरोधित्वात् सिद्ध्यात्मकपरामर्शपूर्वकालोत्पन्नाया स्तादृशेच्छाया न अनुमितावुपयोगः स्वविषयसिद्ध्यनुपहितत्वाभावादतः प्रत्यक्षाद्यतिरिक्तमित्युक्तम् अनुमित्युत्पादाच्चेति तथा च व्यभिचाराल्लाघवमकिञ्चित्करमिति भावः। ननु यत्र वह्निमत्त्वेन पर्वतस्य प्रत्यक्षं जायतामितीच्छैव प्रत्यक्षत्वेन अनुमितिमवगाह्य कृत्वा तत्रापि सिद्धौ सत्यामनुमित्यापत्तिः। किञ्च प्रकृतसाध्यविधेयतानिरूपितप्रकृतपक्षविषयिताकत्वप्रकारकेच्छाया एव उत्तेजकत्वे

वह्निभिन्नान्यविधेयकानुमितिर्जायतां प्रत्यक्षादिभिन्नं वह्निविषयकं ज्ञानं जायतामितीच्छायामपि सिद्ध्यात्मकपरामर्शादनुमितिर्न स्यात् तथा च तादृशतादृशेच्छानामप्युत्तेजकत्वं वाच्यमित्यननुगम इत्यत आह यादृशेति। सिध्यसमानकालीनानामनुमितिप्राक्क्षणावस्थायिसिषाधयिषाणाम् उत्तेजकविधया पक्षतायां प्रवेशो व्यर्थः कारणतावच्छेदकगौरवापादकश्च स्यादतः सिद्धौ सत्यामित्युक्तम्। अत्रैककारानुमित्साव्यक्तीनामनुगतैकरूपेण उत्तेजकत्वलाभार्थं यादृशयादृशेत्युक्तमिति प्राञ्चः। वस्तुतो यद्यदिच्छाव्यक्तीसत्त्व इत्येव वक्तव्यम् अन्यथा यत्र सिद्ध्यात्मको वह्निमात्रपरामर्शः तत्र अनुमितिर्जायतामितीच्छायामपि वह्न्यनुमित्युत्पादादनुमितित्वप्रकारकेच्छात्वेन अपि उत्तेजकतया यत्र सिद्ध्यात्मको वह्निपरामर्श एव सिद्ध्यनात्मकद्रव्यत्वादिसाध्यकः परामर्शः तत्र मनुमितिर्जायतामिच्छादशायां वह्न्यनुमित्यापत्तेः। एवं पर्वतमात्रपक्षकात्सिद्ध्यात्मकपरामर्शाद्वह्न्यनुमितीच्छायाः पर्वते वह्न्यनुमितिस्तत्र वह्न्यनुमितित्वप्रकारकेच्छात्वेन उत्तेजकत्वे यत्र पर्वते महानसे च वह्निव्याप्यवत्त्वपरामर्श एव पर्वते सिध्यात्मकः तत्रापि वह्न्यनुमितिर्जायतामित्याकारकेच्छायां पर्वते वह्न्यनुमित्यापत्तिः न च इष्टापत्तिः अनुभवविरोधात् प्रकारान्तरेण स्वविषयपर्य्यवसानसम्भवेन अनुमित्सानामवगतार्थगोचरज्ञानाजनकत्वात्। अस्माकं तु समूहालम्बनस्थलीयतत्तदिच्छाव्यक्तीनामुत्तेजककोटावप्रविष्टत्वात् न दोष इति। परन्तु तत्पक्षक तत्साध्यकतल्लिङ्गकानुमित्वावच्छिन्नं प्रत्येव पक्षतायाः कारणत्वकल्पने तल्लिङ्गकतत्पक्षकतत्साध्यकानुमितित्वप्रकारिकेच्छात्वाद्यवच्छिन्नाभावोऽनुगतरूपेणैव पक्षतार्थी लाघवान्निवेशनीयो न तु तत्तदिच्छाव्यक्तीनामभावसमुदाय इत्याशयेनैव यादृश यादृशे-

त्युक्तमिति ध्येयम्। इच्छाभावसमुदायस्येति इदमुपलक्षणं सिद्धिधर्मिकयद्यदप्रामाण्यज्ञानसत्त्वे सिद्धिदशायामनुमिति-स्तत्तदप्रामाण्यज्ञानाभावसमुदायस्य अपि सिद्धौ विशेषणत्वं बोध्यम्। अतएव मिश्रैरनुमितिग्रन्थे अप्रामाण्यज्ञानास्कन्दि-तायाः सिद्धेरप्रतिबन्धकत्वमुक्तम्। न क्षतिरिति यद्यपि एव-मपि तत्तदिच्छाविरहव्यक्तीनां विशेष्यविशेषणाभावे विनिगम-नाविरहेणानन्तकार्य्यकारणभावः। न चैकेच्छाविरहविशिष्टो योऽपरेच्छाविरहस्तद्विशिष्टसिद्धित्वेन प्रतिबन्धकत्वे सामानाधि-करण्यात्मकवैशिष्ट्यस्य द्विधा प्रवेशे गौरवमतस्तावतीनामिच्छा-विरहव्यक्तीनामेकत्र द्वयमिति रीत्या युगपदेव सिद्धिविशेषणत्वं लाघवादिति वाच्यं सिद्धौ तावदिच्छाविरहस्य विशेषणत्वे अपि सिद्ध्यंशे प्रत्येकं तत्तदभावसामानाधिकरण्यस्य वैशिष्ट्यविध-याप्रवेशात् सिद्धौ तावदभाववैशिष्ट्यस्यैव तत्तदेकैकाभावेऽपरा-भाववैशिष्ट्यस्य च प्रवेशे अपि गौरवानवकाशात् च। तथापि सिद्धौ तत्तदभावानां युगपद्विशेषणत्वे वैशिष्ट्यरूपसामानाधि-करण्य घटकवृत्तित्वांशस्य सकृदेव प्रवेशाल्लाघवं प्रत्येकाभावेऽभा-वान्तरवैशिष्ट्यस्य सम्बन्धत्वे तु वैशिष्ट्यघटकवृत्तित्वांशस्य बहुशः प्रवेशे गौरवमतो युगपदेव तावतीनामभावव्यक्तीनां सिद्धि-विशेषणत्वं युक्तम्। किं च सिद्धौ तावदभावस्य युगपद्विशेषणत्वे विशेषणतासम्बन्धावच्छिन्नाधिकरणसमवेतत्वमेवानुगतः सम्बन्धः तवत्तु एकाभावेऽपराभाववैशिष्ट्यं विशेषणताविशेषावच्छिन्नाधि-करणे विशेषणतया वृत्तित्वं सिद्धावभावान्तवैशिष्ट्यं तु विशेष-णताविशेषावच्छिन्नाधिकरणे समवेतत्वमित्यनुगतवैशिष्ट्यासम्भ-वात् एव नैकाभावविशिष्टापराभावविशिष्टसिद्धित्वेन प्रति-बन्धकत्वं किन्तु तावदभावविशिष्टसिद्धित्वेनैवेति दिक्। स्वतन्त्रास्तु तत्तदिच्छाविरहकूटविशिष्टसिद्धित्वावच्छिन्नाभावस्य

अखण्डस्य तत्तद्व्यक्तित्वेनैव हेतुत्वं तत्तद्व्यक्तित्वं च तादात्म्येन सैव व्यक्तिरित्यदोषः चिन्तामणिकृन्मते विशिष्टाभावस्यातिरिक्तत्वात् न च कारणतामात्रस्य धर्मावच्छेद्यत्वे प्रमाणाभावात् अवच्छेदकं विना एव तादृशसिद्ध्यभावस्यानुमितिकारणत्वमिति प्रलापो ग्राह्यः व्यापकतागर्भायाः कारणताया अवच्छेदकस्य नानाव्यक्तिस्थल इवैकव्यक्तिस्थलेऽपि सम्भवेन वारयितुमशक्यत्वात् पदार्थान्तररूपायास्तत्कारणताया अवच्छेदकस्य नानाव्यक्तिकारणेष्वपि परित्यागप्रसङ्गादित्याहुस्तच्चिन्त्यम्। केचित्तु पक्षधर्मिकसाध्यविधेयकानुमितित्वप्रकारिकेच्छात्वेन एव अनुगतरूपेण उत्तेजकतालाघवात् इच्छान्तरस्थले च तादृशेच्छोत्पत्त्यैवानुमितिस्तथैव कारणीभूतस्य विशिष्टाभावस्य सम्पत्तेरिति प्राहुः। आलोकपरामर्शादिति आलोकमात्रपरामर्शादित्यर्थः। तदन्येति धूमेनालोकेन वा पर्वते वह्न्यनुमितिर्जायतामितीच्छायामपि धूमलिङ्गकानुमित्यर्थं मात्रपदम्। तथाच धूमलिङ्गकानुमित्साविरहविशिष्टैवालोकलिङ्गकानुमित्सा धूमलिङ्गकानुमितौ प्रतिबन्धिकेत्यर्थः। अत्र यद्यपि धूमलिङ्गकानुमितित्वप्रकारिकेच्छात्वेनैव उत्तेजत्वे धूमेन द्रव्यत्वस्यालोकेन च वह्नेः पर्वतेऽनुमितिर्जायतामितीच्छायामपि वह्निव्याप्यधूममात्रपरामर्शाद्धूमलिङ्गकानुमित्यापत्तेः धूमलिङ्गकवह्न्यनुमितित्वप्रकारकेच्छात्वेन एव तथात्वे तु धूमेन महानसादावालोकेन च पर्वते वह्न्यनुमितिर्जायताम् इति इच्छायामपि धूममात्रपरामर्शात् पर्वते वह्न्यनुमित्यापत्तेः न च पर्वतपक्षकधूमलिङ्गकवह्न्यनुमितौ तादृशानुमितित्वप्रकारिकेच्छाविरहविशिष्टालोकलिङ्गकेच्छात्वेनैव प्रतिबन्धकत्वं धूमेनालोकेन वा अनुमितिर्जायतामिति इच्छायामपि धूममात्रस्य परामर्शाद्धि लिङ्गकानुमित्यभावापत्तेस्तदि-

च्छायाः पर्वतपक्षकवह्न्यनुमितित्वप्रकारकत्वाभावात् तथापि यद्यदिच्छाव्यक्तिदशायामालोक-लिङ्गकानुमितीच्छाव्यक्तिसत्वे-ऽपि पर्वतधर्मिकधूमलिङ्गकवह्न्यनुमितिः प्रामाणिकी तत्त-दिच्छाविरहकूटविशिष्टालोकलिङ्गकानुमितित्वप्रकारिकेच्छात्वे-नैव तादृशधूमलिङ्गकानुमितिप्रतिबन्धकत्वं वाच्यम् अत एव आलोकलिङ्गका सती या धूमलिङ्गका पर्वते वह्न्यनुमितिः सा जायतामितीच्छासत्त्वे अपि पर्वतधर्मिक धूममात्रपरा-मर्शात् न वह्न्यनुमितिः स्वदिच्छाव्यक्तेरुत्तेजकानन्तर्गतत्वात्। न च यत्र धूममात्रपरामर्शोत्तरं धूमालोकोभयलिङ्गकानुमिति-र्जायतामितीच्छा ततस्तदुभयलिङ्गकपरामर्शोत्पत्त्या अनुमिति-स्तत्र तदुभयलिङ्गकपरामर्शोत्पत्तिक्षणे धूमलिङ्गकानुमितिः स्यात् अग्रिमानुमित्यनुरोधेन, तदिच्छाव्यक्तेः उत्तेजकत्वादिति वाच्यं तत्र समूहालम्बनपरामर्शव्यक्तिविशिष्टतत्तदिच्छाव्य-क्तित्वेनैव उत्तेजककोटौ निवेश्यत्वात्। इत्थं चालोकेन महानसे वह्न्यनुमितिर्जायतामिति इच्छासत्त्वेऽपि धूमपरामर्शात् पर्वते वह्न्यनुमितिरप्रत्यूहैव तदिच्छाव्यक्तेरपि स्वस्मिन् उत्तेजकत्वात् अतएव आलोकेन वह्न्यनुमितिर्जायतामिति इच्छोत्तरं धूमा-लोकयोः समूहालम्बनपरामर्शात् पर्वते वह्न्यनुमितिः न स्यात्तस्या अपि धूमपरामर्शाव्यवहितोत्तरत्वेन धूमलिङ्गकानु-मितित्वात् तादृशानुमितिविरोधिन्यालोकलिङ्गकानुमित्सायाः सत्त्वादिति परास्तम् तदिच्छाव्यक्तेः अपि उत्तेजकत्वात्तत्र धूम-लिङ्गकत्वप्रकारिकेच्छात्वेन उत्तेजकत्वासम्भवस्य अनुपदमुक्त-त्वात्। यत्तु पर्वतधर्मिकवह्न्यनुमितिसामान्यं प्रति आलोका-दिलिङ्गकपरामर्शाभाव-विशिष्टालोकादिमात्र-लिङ्गकानुमित्सा-त्वेन प्रतिबन्धकत्वं वाच्यं न तु धूमादितत्तल्लिङ्गकानुमितित्वा-वच्छिन्नं प्रति तदन्यलिङ्गकानुमितीच्छात्वेन प्रतिबन्धकत्व

कार्य्यतावच्छेदकगौरवापत्तेः तथा च उक्तस्थले आलोकलिङ्गक-परामर्शसत्त्वेन तल्लिङ्गकानुमित्या नानुमितिप्रतिबन्धिका। न च मात्रपदवैयर्थ्यं धूमपरामर्शोत्तरमालोकेन धूमेन वा वह्निरनुमितिर्जायतामितीच्छादशायामनुमित्यर्थं तदुपादानादिति चेत्? न धूमपरामर्शदशायामालोकेन भस्मना च वह्निरनुमितिर्जायतामिति इच्छासत्वेऽपि अनुमितिप्रसङ्गात् आलोकपरामर्शाभावविशिष्टाया अपि तादृशेच्छाया आलोकलिङ्गकत्वमात्रप्रकारकत्वात्। न च आलोकलिङ्गकपरामर्शाभावविशिष्टेन धूमलिङ्गकत्वाप्रकारकालोकलिङ्गकानुमित्सात्वेन एव पर्वतधर्मिकवह्न्यनुमितिसामान्यं प्रति विरोधित्वान्नैष दोष इति वाच्यं भस्मलिङ्गकपरामर्शोत्तरमपि आलोकेन धूमेन च वह्निरनुमितिर्जायतामितीच्छासत्त्वे वह्न्यनुमिति प्रसङ्गात्तादृशेच्छाया धूमलिङ्गकत्वप्रकारकत्वेन अविरोधित्वात् तस्मात् तल्लिङ्गकानुमितित्वावच्छिन्नं प्रति प्रागुक्तक्रमेण तत्तदन्यमात्रलिङ्गकानुमित्सात्वेन प्रतिबन्धकत्वमेव सम्यगिति दिक्। यदि च तत्रेति। अन्यसाध्यकानुमित्साया इवान्यलिङ्गकानुमित्साया अपि स्वतःप्रतिबन्धकत्त्वे मानाभावादितिभावः। तत्रेति सिद्ध्यात्मकालोकलिङ्गकपरामर्शोत्तरं धूमेन अनुमिनुयामितीच्छादशायामनुमितेः वारणायेत्यर्थः। न च तत्तदनुमित्साव्यक्तीनामुत्तेजककोटौ अप्रवेशादेव न तत्रानुमितिरिति वाच्यं यत्र सिद्ध्यात्मकालोकपरामर्शोत्तरं धूमलिङ्गकानुमित्सा तत्र च क्रमेण सिद्ध्यात्मकधूमपरामर्शाद्वह्न्यनुमितिस्तत्र धूमपरामर्शोत्पत्तिक्षणे वह्न्यनुमित्यापत्तेः पर्वतपक्षकवह्न्यनुमितौ तदिच्छाव्यक्तेरप्युत्तेजकत्वात् अन्यथा तत्रैव सिद्ध्यात्मकधूमपरामर्शाद्वह्न्यनुमितिर्न स्यादिति भावः। यद्यपि वक्ष्यमाणस्वविषयसिद्ध्यनुपहितत्वविशेषणेनैव धूमादि लिङ्गकतत्तत्परामर्शविशि-

च्छाया तत्तदिच्छाव्यक्तेरुत्तेजकतायां न कोऽपि दोषः प्रागुक्तस्थले धूमपरामर्शविशिष्टानुमित्साव्यक्तिविरहसहकृतसिद्धिसत्त्वादेव धूमपरामर्शोत्पत्तिदशायामपि अनुमित्यापत्तेरसम्भवात् तथापि मिश्रादिसम्मतमेकावच्छेदेन पक्षतापरामर्शोभयजन्यत्वमनुमितेः सम्पादयितुमनुमित्सामेवान्यथा निर्वक्ति तल्लिङ्गकानुमित्सेति वाच्येति परेणान्वयः। उत्तेजिका इति शेषः। ननु तल्लिङ्गकानुमितित्वप्रकारिकेच्छाव्यक्तीनामुत्तेजकत्वे वह्न्यनुमितिः जायतामितीच्छायां सिद्ध्यात्मकालोकपरामर्शादालोकलिङ्गकानुमितिर्न स्यात् तदिच्छाव्यक्तेरालोकलिङ्गकत्वाप्रकारकत्वादत आह तदन्यमात्रेति। धूमालोकाभ्यां वह्न्यनुमितिर्जायतामितीच्छादशायां सिद्ध्यात्मकालोकपरामर्शादनुमित्यर्थं मात्रपदं तथा च तल्लिङ्गकानुमितित्वाप्रकारकत्वे सति या यत्किञ्चिल्लिङ्गकानुमितित्वप्रकारिकेच्छा तदतिरिक्तानुमित्सासिषाधयिषापदेन वाच्येत्यर्थः। तेन प्रमेयलिङ्गकानुमितिस्थले तदन्यलिङ्गाप्रसिद्धावपि न क्षतिः। अत्र तदन्यमात्रलिङ्गकानुमित्सातिरिक्तं न विशेषणं किं तु उत्तेजकीभूततत्तदिच्छाव्यक्तीनां परिचायकमिति मन्तव्यम्। ननु तल्लिङ्गकानुमित्साविरहविशिष्टसिद्धिसत्त्वेऽपि अन्यल्लिङ्गकानुमित्सया अन्यलिङ्गकपरामर्शोत्तरं प्रकृतपक्षकप्रकृतसाध्यकानुमितेः उत्पादेन व्यभिचारात् कुतः पक्षताया अनुमितिहेतुत्वमित्यत आह लिङ्गेति। लिङ्गविशेषनियन्त्रितलिङ्गविशेषावच्छिन्नकार्य्यतानिरूपितकारणताकम् तथा च यद्यदनुमित्साव्यक्तिसत्त्वे सिद्धिदशायां तल्लिङ्गकतत्पक्षकतत्साध्यकानुमितिर्जायते तत्तदिच्छाव्यक्तिविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकतत्पक्षकतत्साध्यकानुमितित्वावच्छिन्नं प्रत्येव हेतुरतो न व्यभिचार इति भावः। अन्यलिङ्गकानुमित्सायास्तल्लिङ्गकानुमितौ

स्वातन्त्र्येण विरोधित्वे पक्षताया लिङ्गविशेषानियन्त्रितत्वेऽपि न क्षतिरित्याह तल्लिङ्गकानुमिताविति। सिद्ध्यभावदशाया-मन्यलिङ्गकेच्छासत्त्वेऽपि तल्लिङ्गकानुमित्युत्पत्तेः आह सिद्धि-कालीनेति। सिद्धिविशिष्टेत्यर्थः। तल्लिङ्गकानुमित्यसत्त्वेऽन्य-लिङ्गकानुमित्सायास्तल्लिङ्गकानुमित्यप्रतिबन्धकत्वादाह तल्लि-ङ्गकानुमितीच्छाविशेषविरहकूटविशिष्टेति। तल्लिङ्गकानुमिति-त्वं तल्लिङ्गकपरामर्शाव्यवहितोत्तरानुमितित्वं तथाच आलोक-लिङ्गकानुमित्सादशायां धूमालोकयोः सिद्ध्यात्मकपरामर्शोत्तरं पर्वते वह्न्यनुमिति र्न स्यात् तस्यापि निरुक्तधूमलिङ्गकत्वेन आलोकलिङ्गकानुमित्साप्रतिवध्यत्वादतो विशेषपदम् तेन वस्तु-गत्या तल्लिङ्गकानुमितिगोचरयद्यदिच्छाव्यक्तिसत्त्वेऽन्यलिङ्गका-नुमित्साकाले तल्लिङ्गकानुमिति र्जायते तत्तदिच्छाविरहकूट-विशिष्टान्यलिङ्गकानुमित्सात्वेनैव तल्लिङ्गकानुमितौ प्रतिबन्ध-कत्वम् उक्तस्थले च आलोकलिङ्गकानुमित्साव्यक्ते रपि वस्तुगत्या धूमलिङ्गकानुमितित्वगोचरतया तदिच्छाव्यक्तेः उत्तेजककोटौ निविष्टत्वान्न दोषः। दीधितौ विशेषपदासत्त्वपक्षेऽपि तल्लिङ्ग-कानुमित्साविरहविशिष्टत्वस्य उक्त एव अर्थः ग्राह्यः। अत्रापि वैशिष्ट्यमेकसमयावच्छेदेन एकात्मवृत्तित्वम् तेन पुरुषान्तरीय-तल्लिङ्गकानुमितीच्छामादाय अन्यलिङ्गकानुमित्सादशायां न अनुमितेः उत्पादः। न च तल्लिङ्गकानुमित्साभिन्नतदन्यलिङ्गका-नुमित्सैव प्रतिबन्धिका अस्तु तल्लिङ्गानुमित्साविरहविशिष्टत्वप्रवेशे गौरवादिति वाच्यम्? यत्र सिद्ध्यात्मकापेक्षा बुद्ध्यात्मकधूमप-रामर्शोत्तरं क्रमेण आलोकलिङ्गकानुमितित्वप्रकारेण धूमलिङ्ग-कानुमितित्वप्रकारकेण च इच्छाद्वयी तत्र चतुर्थक्षणे धूमलिङ्ग-कानुमित्यनुत्पादापत्तेः धूमलिङ्गकानुमित्साभिन्नाया एव आलोकलिङ्गकानुमित्सायाः सत्त्वादिति भावः। अन्यलिङ्गका-

नुमित्यैव वेति वाकारः अनास्थायाम् पूर्वकल्पोक्तस्य तल्लिङ्ग-कानुमित्साविरहविशिष्टसिद्ध्यभावत्वेन एव तल्लिङ्गकानुमिति-हेतुत्वस्य लाघवेन तदपेक्षया एतत्कल्पनस्य गुरुत्वात् तत्पक्षक-तत्साध्यकानुमितौ सामान्यतः सिषाधयिषाविरहविशिष्ट-सिद्ध्यभावत्वेन कारणान्तरस्यापि अत्र कल्पे वक्तव्यत्वात् अन्यथासिद्ध्यात्मकपरामर्शमात्रादनुमित्यापत्ते स्तादवस्थ्यादिति ध्येयम्। ननु साधकमानं यदि सिद्धिजनकं मानं तदा परामर्शमात्रादपि अनुमिति र्न स्यात् तस्यैव तादृश-साधकमानत्वादतो व्याचष्टे साध्यवत्त्वनिश्चय इति। साध्यव-त्त्वसंशयेऽपि अनुमित्युत्पादान्निश्चय इत्युक्तम्। यद्यपि साध्य-वत्त्वनिश्चयत्वं साध्यसामान्याभावाप्रकारकत्वे सति साध्यप्रका-रकत्वं तदा पर्वतः कपिलवह्निमान्न वेति सन्देहदशायां पर्वतो वह्निमानिति अनुमिति र्न स्यात् तादृशसन्देहस्यापि वह्निसामान्याभावाप्रकारकत्वे सति वह्निप्रकारकत्वात् न च येन रूपेण साध्यतातन्मात्रावच्छिन्नप्रकारकत्वं निश्चयत्वघटकमतः कपिलवह्नित्वावच्छिन्नप्रकारतासन्देहस्य वह्नित्वमात्रावच्छिन्नप्रकारताकत्वाभावात् न दोष इति वाच्यम्। पर्वतः कपिलवह्निमानिति निश्चयदशायामपि पर्वतो वह्निमानित्यनुमित्यापत्तेः तादृशनिश्चयस्य वह्नित्व-मात्रावच्छिन्नप्रकारकत्वाभावात् न चेष्टापत्तिरनुभवविरो-धात् अत एव गव्याश्रितत्वे साध्ये सकलगवाश्रितत्वं न हेतुरविशिष्टसाध्यवत्त्वानुमितौ विशिष्टसाध्यवत्ताग्रहस्य अपि विरोधितया पक्षधर्मताग्रहदशायां सिद्धसाधना-दिति शक्तिवादे मिश्रैरपि उक्तं यदि च साध्यप्रतियोगिका-भावाप्रकारकत्वे सति साध्यप्रकारकत्वमेव साध्यनिश्चयत्वं तदा अरुणवह्निशून्यः पर्वतो वह्निमानित्येवं निश्चयेऽपि पर्वतो वह्नि-

मानित्यनुमित्यापत्तेः उक्तनिश्चयस्य वह्निप्रतियोगिकाभावप्रकारकत्वेन अविरोधित्वात् तथापि वह्नित्वावच्छिन्नविधेयकानुमितिं प्रति वह्निसामान्याभावाप्रकारकवह्निमात्रावच्छिन्नप्रकारकत्वेन कपिलवह्न्यभावाप्रकारक कपिलवह्नित्वावच्छिन्नप्रकारकत्वादिना च प्रत्येकधर्मेणैव प्रतिबन्धकत्वात् तत्तत्सिद्ध्यभावकूटस्य एव पक्षतात्वं विरोधिसाध्ये निश्चयानाम् अनुगतैकधर्माभावात् वस्तुतस्तु साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितप्रकृतपक्षनिष्ठविशेष्यताशालित्वमेव साध्यनिश्चयत्वं वाच्यं पर्वतः कपिलवह्निमान्नवेत्यादिसंशये तु पर्वतनिष्ठविशेष्यत्वं वह्नित्वावच्छिन्नप्रकारत्वभिन्नत्वेन कपिलवह्न्यभावत्वावच्छिन्नप्रकारकत्वेन निरूपितमतस्तद्व्युदासः संशयविशेष्यतामात्रस्य एव प्रकारताद्वयनिरूपितत्वादेवं च निर्वह्निर्वह्निमांश्च पर्वत इत्यादि समुच्चयस्य अपि साध्यनिश्चयत्वसम्भवात् तत्सत्त्वेऽपि न वह्न्यनुमितिः समुच्चयस्थले प्रकारताद्वयनिरूपितविशेष्यताद्वयोपगमात् भूतलं घटवत् पटवच्चेत्यादिस्थले भूतलस्य द्विधाभानवदत्रापि पर्वतस्य प्रकारताद्वयांशे द्वैविध्येन भानात् इति अन्यत्र विस्तरः। तत्र पर्वते तस्य वह्नेः धर्मित्वेति न चैवं वह्निमान् अवह्निमानित्येवमपि अनुमितिः स्यात् धर्मितावच्छेदकमनन्तर्भाव्यवह्निमत्तानिश्चयस्य अविरोधित्वादिति वाच्यमिष्टत्वात् वह्निमत्पक्षकवह्निसाध्यकानुमितिं प्रति धर्मितावच्छेदकमतन्तर्भाव्यपक्षताया हेतुत्वाकल्पनेन तदापत्त्यसम्भवाच्च अत्र धर्मितेत्युपलक्षणम् एकसम्बन्धेन पक्षे साध्यवत्त्वनिश्चयेऽपि सम्बन्धान्तरेण साध्यानुमितेरुत्पादात् सम्बन्धविशेषोऽपि अनुसरणीयः। पर्वतत्वस्य अवच्छेदकत्वं विषयीकृत्य एकत्र पर्वते साध्यसिद्धावपि अन्यत्र पर्वते सर्वथैवानुमित्युत्पत्तेः पर्वतत्वसामानाधिकरण्येन इत्युक्तम् अवच्छेदक-

त्वम् अविषयीकृत्य पर्वतत्वप्रकारेणेति तदर्थः। तादृशानुमितिः पर्वतत्वसामानाधिकरण्येन साध्यानुमितिः। धर्मिविशेषोऽपि इति। तथा च पर्वतत्वप्रकारेण तत् पर्वतधर्मिकवह्न्याद्यनुमितौ तादृप्येण तत्पर्वतधर्मिकवह्न्यादिनिश्चयत्वेनैव प्रतिबन्धकत्वं वाच्यमिति भावः। इदमुपलक्षणम् साध्यतावच्छेदकरूपेण एक-साध्यव्यक्तेः सिद्धावपि विना अनुमित्सां तादृप्येण साध्यान्तर-व्यक्तेरनुमितेरानुभाविकत्वे साध्यविशेषोऽपि निवेशनीय इत्यपि द्रष्टव्यम्। न अन्यथेति धर्म्यन्तरेऽनुमित्यनुत्पादे तु धर्मि-विशेषोऽपि न निवेश्य इत्यर्थः। अथ तत्पुरुषीयवह्न्या-दिविधेयकानुमितिं प्रति तदीयानुमित्साविरहविशिष्ट-वह्न्यादिमत्तानिश्चयत्वेनैव समानविशेष्यता प्रत्यासत्त्या एव प्रतिबन्धकत्वं न तु सामानाधिकरण्यप्रत्यासत्त्या तथात्वं तथा सति पर्वतत्वादिविशिष्टविशेष्यकवह्न्यादि-प्रकारकानुमितौ पर्वतत्वादिविशिष्टविशेष्यकवह्न्यादिमत्तानि-निश्चयत्वेन विरोधित्वे धर्मितावच्छेदकविधया पर्वतत्वमहान-सत्वाद्यनेकधर्मान्तरभावेण अनन्तकार्य्यकारणभावकल्पनापत्तेः। न च तवापि पुरुषभेदेन अनन्तकार्य्यकारणभावः तत्तत्पुरुषस्य अपि क्वचित्पक्षतया तद्भेदेन कार्य्यकारणभावनानात्वस्य त्वया अपि अङ्गीकर्त्तव्यत्वात् तथा च अर्थवशसम्पन्न एव अवश्यं धर्मिविशेषस्य निवेश इति चेत्? न पाषाणमयत्वेन पर्वते वह्नि-निश्चयेऽपि पर्वतत्वेन तत्र वह्न्यनुमित्युत्पत्तेः। समानविशेष्य-तया प्रतिबन्धकत्वासम्भवात् न च एकधर्मावच्छिन्नविशेष्यत्वमेव प्रत्यासत्तिरित्यदोषः पाषाणमयत्वस्यापि एकधर्मतया तदव-च्छिन्नविशेष्यत्वस्य अपि अव्यावर्त्तकत्वात् तत्तद्धर्मावच्छिन्नविशे-ष्यत्वेन प्रत्यासत्तितायान्तु तत्तद्धर्मघटितसम्बन्धभेदेन कार्य्यका-रणभावानन्त्यम् अत्रापि तत्तत्पुरुषत्वस्य अवच्छेदकधर्मविध-

याप्रवेशे गौरवं पुनरधिकं विनिगमनाविरहेण प्रकारताप्रत्यासत्त्या प्रतिबन्धकभावकल्पनापत्तिश्च। वस्तुतः समानविशेष्यतया विरोधित्वे यत्र पर्वतचत्वरयोरेव साध्यवत्तानिश्चयात्मकः साध्यव्याप्यवत्तापरामर्शस्तदनन्तरं च पर्वतांशे साध्यवत्तानिश्चयस्याप्रामाण्यज्ञानं पर्वतधर्मिकानुमितिर्जायतामिति इच्छा वा तत्र उत्तरकाले पर्वते इव चत्वरेऽपि साध्यानुमितिः स्यात् अप्रामाण्यज्ञानाभावविशिष्टस्य अनुमित्साविरहविशिष्टस्य च साध्यनिश्चयस्य विशेष्यतासम्बन्धेन चत्वरे अपि विरहात् तदप्रामाण्यज्ञानव्यक्तेरनुमित्साव्यक्तेर्वा अनुत्तेजकत्वे पर्वतेऽपि वह्न्यनुमित्यनुत्पादापत्तेरिति दिक्। पचतेत्यादि। पचतावच्छेदकीभूतपर्वतत्वादिधर्मावच्छेद्यत्वमविषयीकृत्यसाध्य सिद्धौ अपीत्यर्थः। तदवच्छेदेन इति। पचतावच्छेदकीभूतपर्वतत्वादिधर्मावच्छेद्यत्वं विषयीकृत्य अनुमितिदर्शनादित्यर्थः। तदवच्छेदेन सिद्धेरिति। पर्वतत्वावच्छेद्यत्वावगाहिसिद्धेरित्यर्थः। विरोधित्वमिति अग्रेण अन्वयः। तथाच पर्वतत्वावच्छेद्यत्वावगाहिपर्वतधर्मिकवह्नि विधेयकानुमितिं प्रति पर्वतत्वावच्छेद्यत्वावगाहिपर्वतधर्मिकवह्निमत्तानिश्चयत्वेन प्रतिबन्धकत्वं तच्च च पर्वतविशेष्यकत्वं पर्वतत्वविशिष्टविशेष्यकत्वमात्रं तेन पर्वतत्वावच्छेदेन वह्निनिश्चयेऽपि पर्वतो वह्निमानित्याकारिकाया इव नीलपर्वतो वह्निमानित्यारिकाया अपि अनुमितेः न उत्पत्तिः पर्वतत्वावच्छेद्यत्वं तु न स्वरूपसम्बन्धविशेषो मानाभावात् किन्तु पर्वतत्वव्यापकसाध्यप्रतियोगिकत्वं तदपि संसर्गमर्यादयैव भासते पर्वतो वह्निमानित्याकारकानुमितौ पर्वतत्वव्यापकवह्निसंयोगत्वेनैव संयोगस्य संसर्गविधया भानस्वीकारात् न च पचतावच्छेदकव्यापकत्वमेव तदवच्छेद्यत्वमस्तु साध्यप्रवेशो व्यर्थं इति वाच्यं? पर्वतत्वावच्छेदेन तद्रूपवत्त्वानुमितेः प्रमात्वापत्तेः समवायस्यैक-

त्वात्। पर्वतत्वव्यापकसमवायेन पर्वतस्य तद्रूपव्यक्तिमत्त्वात् न च पर्वतत्वव्यापकवह्निसंयोगेन वह्नेः साधनव्यापकत्वाग्रहात् तादृशसम्बन्धेन वह्न्यनुमित्यसम्भव इति वाच्यम् ? एकविशेषबाधसहकारात् व्यापकतानवच्छेदकप्रकारेणैव निरुक्तसिद्ध्यभावरूपपक्षतासहकारात् व्यापकतानवच्छेदकसम्बन्धेन अपि साध्यानुमितेः सामान्यपरामर्शादेव सम्भवात्। न च पर्वतधर्मिकवह्न्यनुमितिमात्रं प्रत्येव पर्वतत्वावच्छेद्यत्वावगाहिवह्निनिश्चयस्य विरोधित्वात् प्रतिबध्यकोटौ पर्वतत्वावच्छेद्यत्वप्रवेशो व्यर्थ इति वाच्यं ? पर्वतत्वावच्छेदेन सिद्ध्युत्तरं तदवच्छेदेन अनुमित्सया पर्वतत्वावच्छेदेन एव तत्सामानाधिकरण्येनापि अनुमित्यापत्तेः यत्तु पर्वतत्वावच्छेद्यत्वमवच्छेद्यतासम्बन्धेन पर्वतत्वादिकं वा साध्यांशे प्रकारतयैव अनुमितौ भासते तथाच पर्वतः पर्वतत्वावच्छेद्यवह्निमानित्येवं पर्वतत्ववद्वह्निमानित्येवं वा अनुमितिरिति प्राचीनाः। तच्चिन्त्यं, शिखरावच्छेदेन पर्वतो वह्निमानित्यनुमितौ तु पक्षतावच्छेदकीभूतशिखरावच्छिन्नत्वं स्वरूपसम्बन्धरूपमिव भासते न तु व्यापकत्वलक्षणम् अननुभवात् एवं च तत्र शिखरावच्छेद्यवह्निसंयोगेन वह्न्यनुमितौ शिखरावच्छेद्यवह्निसंयोगेन एव वह्निनिश्चयो विरोधी नतु संयोगमात्रेणेति अवधेयम्। तत् सामानाधिकरण्यमात्रेण इति। पक्षतावच्छेदकरूपेण पक्षे साध्यानुमितित्वमेव तत्सामानाधिकरण्येन अनुमितित्वं तच्च पक्षतावच्छेदकावच्छेदेन अनुमितावपि अस्ति इत्यतो मात्रपदम्। सिद्धिमात्रस्येति। अत्र च पक्षतावच्छेदकसामानाधिकरण्यमात्रेण अनुमितित्वं न तदवच्छेद्यत्वानवगाह्यनुमितित्वं पर्वतत्वावच्छेदेन तत्सामानाधिकरण्येन च परामर्शद्वयात् पर्वतत्वावच्छेद्यत्वावगाहितदनवगाह्यनुमित्योर्युगपदुत्पादप्रसङ्गात् सामग्री-

सत्वात् किन्तु यद्रूपेण साध्यत्वावच्छेदकसम्बन्धत्वं तादृशधर्ममात्रावच्छिन्नसंसर्गताकपक्षधर्मिकसाध्यानुमितित्वं निरुक्तपरामर्शद्वयस्थले च संयोगनिष्ठद्विविधसंसर्गताकसमूहालम्बनानुमितिस्वीकारात् तथाच संयोगत्वमात्रावच्छिन्नसंसर्गताकपर्वतधर्मिकवह्निविधेयकानुमितिं प्रति संयोगत्वविशिष्टसंसर्गताकपर्वतधर्मिकवह्निमत्तानिश्चयत्वेन एकरूपेण सिद्धिद्वयं प्रतिबन्धकं पर्वतत्वावच्छेदेन वह्न्यनुमितौ तु संयोगनिष्ठसंसर्गतानसंयोगत्वमात्रावच्छिन्ना किन्तु पर्वतत्वावच्छेद्यवह्निसंयोगत्वावच्छिन्नैव वेति पर्वतत्वसामानाधिकरण्येन सिद्धिसत्वेऽपि तदुत्पत्तिः न चैवं संयोगमात्रेण वह्निनिश्चयेऽपि पर्वतीयसंयोगेन वह्न्यनुमितिः स्यात् न स्यात् च पर्वतीयत्वविशिष्टसंयोगेन वह्निनिश्चयेऽपि संयोगमात्रेण पर्वते वह्न्यनुमितिरिति वाच्यमिष्टत्वात् सामान्यघटितविशेषप्रकारेणैव तादृशसम्बन्धेन अपि सिद्धेः सामान्यानुमितिविरोधित्वात् एवमनयैव दिशा अन्यत्रापि प्रतिबन्धकत्वमूह्यमिति संक्षेपः। इत्थं च इति। पक्षतावच्छेदकावच्छेदेन सिद्ध्युत्तरं तत्सामानाधिकरण्यमात्रेण अनुमित्सायामपि तदवच्छेदेन अनुमित्यनुत्पत्तेः तादृशानुमितौ पक्षतावच्छेदकावच्छेदेन अनुमित्सैव उत्तेजिका वाच्या एवं पक्षतावच्छेदकसामानाधिकरण्यमात्रेण सिद्ध्युत्तरं तदवच्छेदेन अनुमित्सायामपि तत् सामानाधिकरण्येन अनुमित्यनुत्पत्तेः तादृशानुमितौ पक्षतावच्छेदकसामानाधिकरण्यमात्रेण अनुमित्सैव उत्तेजिका वाच्येति लिङ्गविशेषनियन्त्रितमेवानुमितिविशेषेण अपि नियन्त्रितपक्षत्वम्। यद्वा तत्पक्षकतत्साध्यकानुमितिं प्रत्येव सामान्यतः पक्षताहेतुः। पक्षतावच्छेदकावच्छेदेन अनुमितौ तद्धर्मावच्छेदेन सिद्धिकालीना तत्सामानाधिकरण्यमात्रेण अनुमित्सा पृथक् प्रतिबन्धिका पक्षतावच्छेदकसा-

सामानाधिकरण्यमात्रेण अनुमितौ अपि सामानाधिकरण्येन सिद्धिकालीना तदवच्छेदेन अनुमित्सा पृथक् प्रतिबन्धिका वाच्या। यदि च असत्यामपि समानाकारकसिद्धौ पक्षतावच्छेदकावच्छेद्यत्वावगाह्यनुमित्सायां सत्यां तत् सामानाधिकरण्यावगाह्यनुमितेर्नोत्पादः तदा सिद्धिकालीनत्वं प्रतिबन्धकतायां न प्रवेश्यमितिभावः। साध्यविशेष्यकेति। विना अनुमित्सामित्यादि तां प्रति पक्षविशेष्यकानुमितिं प्रति इति अर्थः। समानाकारेति। तथाच संयोगसम्बन्धावच्छिन्नाधेयतासम्बन्धेन पर्वतनिष्ठप्रकारतानिरूपितवह्नित्वावच्छिन्नविधेयताकानुमितिं प्रति तादृशसम्बन्धावच्छिन्नपर्वतनिष्ठप्रकारतानिरूपितवह्नित्वावच्छिन्नविशेष्यताकनिश्चयत्वेन विरोधित्वं विधेयत्वं तु न प्रकारतानियतं किन्तु पर्वते वह्निः पर्वतो वह्निमानित्याद्यनुमितौ पर्वते वह्निमनुमिनोमि न तु वह्नौ पर्वतमित्यनुभवसाक्षिको विषयताविशेषः क्वचित् विशेष्यवृत्तिरपीति नासिद्धिः अतएव गुणानां गुणत्वमित्यत्र विशेष्यीभूतस्यापि गुणत्वस्य विधेयत्वमुक्तमुपाध्यायैरिति ध्येयम्। ननु पक्षविशेष्यकसिद्ध्युत्तरं साध्यविशेष्यकानुमितिः न क्वापि अनुभवसिद्धा इत्यत आह तादृशेति। पक्षनिष्ठप्रकारतानिरूपितसाध्यविधेयकानुमितिं प्रति इत्यर्थः। सिद्धिमात्रमिति। साध्यविशेष्यिका पक्षविशेष्यिका च सिद्धिर्विरोधिनी इत्यर्थः। पर्वतो वह्निमानिति निश्चयोत्तरं वह्नौ पर्वतव्याप्यवत्तापरामर्शाद्वह्निः पर्वते इत्यनुमितौ च वह्नेर्न विधेयत्वं किन्तु पर्वतस्यैव तथात्वम्। यद्व्याप्यवत्ताज्ञानजन्यत्वमनुमितौ तदंश एव विधेयताख्यविषयतास्वीकारात् इति भावः। ननु एवं प्रसिद्धसाध्यकपरामर्शात् सर्वत्र एव पक्षसाध्योभयविशेष्यकानुमितिः स्यात् पक्ष-

तादृयसत्त्वेन उभयधर्मावच्छिन्नसामग्रीसत्त्वात् इति अस्वरसा-
न्नाघवात् च। साध्यज्ञानत्वेनैव साध्यविशेष्यकानुमितिं प्रति
विरोधित्वमाह साध्यप्रसिद्धिरेव इति। एवकारेण अनुमित्सायाः
उत्तेजकत्वस्यापि प्रतिक्षेपः सूचितः। साध्यज्ञानमात्रस्य
विरोधितायामनुभवमपि प्रमाणमाह अतएव इति। साध्य-
धर्मिकानुमितौ तज्ज्ञानमात्रस्य विरोधित्वादेव इत्यर्थः। इत्थं
च धूमव्यापकीभूताभावप्रतियोगिवह्न्यभाववान् ह्रद इत्यादि-
व्यतिरेकपरामर्शजन्याया ह्रदे धूमाभाव इत्याद्यभावसाध्य-
कानुमितेरेव साध्यविशेष्यकत्वात् तत्र एव साध्यज्ञानं
विरोधीति मन्तव्यं वह्न्यादिभावसाध्यकस्थले तु विशेष्य-
विधया वह्न्यादिसाध्यविधेयकानुमितेरलीकतया तां प्रति
साध्यज्ञानत्वेन विरोधित्वासम्भवादिति ध्येयम्। विशेष्यत्वा-
ख्यविधेयतावच्छेदकत्वसम्बन्धेन अनुमितिसामान्यं प्रति एव
वा प्रकारतासंसर्गेण ज्ञानमात्रस्य प्रतिबन्धकत्वं वाच्यम्। न चैव-
मपि गोत्वाभावो गोत्वव्यापकसास्नाशून्य इत्याकारकपरामर्शा-
द्गोत्वाभावे गोत्वं नेति एवं पक्षनिष्ठप्रकारतानिरूपितसाध्य-
विधेयकानुमिति र्न स्यात् परामर्शस्यैव साध्यज्ञानत्वेन विरो-
धित्वादिति वाच्यमिष्टत्वात् गोत्वाभावो न गोत्ववानित्येवं
पक्षनिष्ठविशेष्यतानिरूपितसाध्यविधेयताकानुमितेरेव तत्रोत्-
पादात्। साध्यतावच्छेदकधर्मानवच्छिन्नपक्षनिष्ठप्रकारतानिरू-
पितसाध्यविधेयकानुमितित्वेनैव वा प्रतिबध्यत्वं वाच्यमित्यपि
कश्चित्। वस्तुतस्तु अप्रसिद्धसाध्यकपरामर्शस्य विशेष्यविधया
साध्यविधेयकानुमितित्वावच्छिन्नं प्रत्येव हेतुत्वमन्यथा गोत्वा-
भावव्याप्यवत्त्वप्रकारकपरामर्शजन्यानां विशेषणस्य विशेष्यवि-
धया गोत्वाभावविधेयकानुमितौ व्यभिचारापत्तेः तथा च उक्त-
स्थले गोत्वाभावो न गोत्ववानित्यपि नानुमितिर्विशेषणवि-

धया गोत्वाभावविधेयकानुमितौ गोत्वव्यापकसाध्याभाववत्तापरामर्शस्य अहेतुत्वात् तथाविधगोत्वाभावानुमितिहेतोः गोत्वाभावान्वयव्याप्यवत्ताप्रकारकपरामर्शस्य विरहेण कारणबाधाच्च 'प्रसिद्धासिद्धसाध्यकोभयपरामर्शयोः प्रसिद्धाप्रसिद्धसाध्यकोभयानुमित्यनुगतधर्मावच्छिन्नं प्रति अनुगतरूपेण हेतुत्वस्य दुर्वचत्वादित्यन्यत्र विस्तरः। व्याप्तिस्मरणादिनेति। यत्र अनुमित्योत्तरं व्याप्तिस्मरणं ततः सिद्धग्रात्मकपरामर्शस्तत्र इत्यर्थः तथैव तथा सत्येव विशिष्टाभावस्येति अनुमित्साविरहविशिष्टसिद्ध्यभावस्येत्यर्थः। मिश्रमतमाह अन्ये तु इति। अनुमित्सायामिति सिद्धिदशायामिति शेषः। वाच्येति। सिषाधयिषापदेन अनुमित्सायोग्यता वाच्या इत्यर्थः। स्वोत्पत्ति इत्यादि। स्वपदं तत्तदनुमित्सापरं तथाच तत्तदनुमित्सोत्पत्त्यनन्तरत्वविशिष्ट तत्तदनुमित्साविषयसिद्धिप्रागभावो योग्यतेत्यर्थः। सिद्धिकालीनयत्यदनुमित्साव्यक्तिदशायासुत्तरकालमनुमितिर्भविता तत्तदनुमित्साव्यक्तिविषयीभूतसिद्धिप्रागभावस्य वर्त्तमानसिद्ध्यन्तरदशायामपि सत्त्वात् तदानीमनुमिते र्वारणाय विशिष्टान्तम्। तत्तदनुमित्सोत्पत्त्यनन्तरत्वन्तु न तत्तदनुमित्सोत्पत्तिध्वंसविशिष्टत्वं तथा सति अनुमित्सोत्पत्त्यनन्तरक्षणेऽनुमित्यपलापापत्तेः सिषाधयिषोत्पत्तिक्षणे अनुमित्सोत्पत्तिध्वंसविशिष्टस्य तद्विषयसिद्धिप्रागभावस्य असत्त्वात्। किन्तु तत्तदनुमित्साप्रागभावविरहविशिष्टत्वं वैशिष्ट्यं च एककालावच्छेदेन एकात्मवृत्तित्वमिति नातिप्रसङ्गः। तत्तदनुमित्साप्रागभावविरहविशिष्टत्वमात्रोक्तौ अनुमित्सोत्तरमनुमित्युत्पादे अपि पुनरनुमित्यापत्तिः अतस्तत्तदनुमित्साविषयसिद्धिप्रागभावपर्य्यन्तानुधावनम्। न च सिद्धिकालीनानुमित्सया स्वविषयीभूतैकानुमित्युत्पाददशायामपि दिना-

न्तरभाविस्वविषयीभूताऽनुमित्यनन्तरप्रागभावसत्त्वात् उत्तरकालमनुमित्यन्तरापत्तिरिति वाच्यम्? तत्तदनुमित्साप्रागभावविरहविशिष्टस्य तत्तदनुमित्साविषयीभूतसिद्धिप्रागभावकूटस्य विवक्षितत्वात् उक्तस्थले च उत्पन्नानुमितेरेव प्रागभावस्य असत्त्वादिति भावः। इन्द्रियादिनेति। अनुमानतः साध्यनिर्णये तु स्वविषयसिद्ध्यनुत्पाद एव न स्येयादिति भावः। यद्यपि स्वपदेन अनुमित्युपधायकतत्तदनुमित्साव्यक्तीनामुपग्रहे दिवसान्तरीयानुमित्साव्यक्तेः योग्यतायामप्रवेशान्नैष दोषः तथापि वक्त्रनुमितित्वप्रकारेण अतीतानागतानुमितिगोचरेच्छया सिद्धिकाले वक्त्रनुमितिर्न स्यात्तद्विषयानुमितिप्रागभावकूटस्य तदानीमसत्त्वात् तत्तदनुमित्साव्यक्तिपूर्वक्षणावृत्तित्वेन तत्तदनुमित्साविषयसिद्धीनां तत्तदनुमित्साकालीनत्वेन वा तत्तदनुमित्साविषयसिद्धिप्रागभावानां विवक्षया कथञ्चिदुपादने अपि अनुमितिद्वयं जायतामितीच्छायामनुमितिद्वयं न स्यात् तत्तदनुमित्साविषयीभूतानुमितिप्रागभावकूटस्य प्रथमानुमित्युत्पत्तिदशायाम्। असत्त्वात् तादृशानुमित्साया अपि मिश्रैः उत्तेजकत्वोपगमादित्यादिदूषणं द्रष्टव्यम्। उत्सर्गतः बाधकं विना तेनानुमित्सोत्तरं यत्र परामर्शविरोधिज्ञानापसरणक्रमेण चिरकालोत्तरं परामर्शोत्पादः तत्र सिद्धिदशायां न योग्यता अत एव वक्ष्यति फलबलेनेति। तावानेव काल इति सेत्यनुषज्यते। ननु एतादृशकालस्य उत्तेजकत्वे किं मानमत आह फलेति। ननु यत्र अनुमित्सोत्तरं परामर्शस्तत्रत्यकालानामुपादाने यत्र सिद्ध्यात्मक परामर्शोत्तरमनुमित्सा तत्रानुमिति न स्यात् तत्रत्यकालानामनुत्तेजकत्वादत आह अग्रेति। उपलक्षित इति। तथा च अनुमित्सानाधिकरणतत्तत्कालोऽनुमित्सा च द्वयमपि

उत्तेजकमित्याशयः। मिश्रमतमुपहसन् आह यदि चेति। तावानेवेति। सिद्धिनाशोत्तरमपि यावत्कालमध्येऽनुमिति-र्नोत्पद्यते तावान् एव काल इत्यर्थः। ननु क्रियात्मकानां तावत्समयानामभावस्य सर्वदैवात्मनि सत्त्वात् नोक्तयोग्यताविव-क्षयापि अनुमित्सानाशोत्तरमनुमितेः सम्भव इत्यत आह विशि-ष्येति। तथा च जन्यमात्रस्य कालोपाधितया आत्मसमवेतं तत्तज्ज्ञानादिकमेव तादृशसमयो वाच्य इत्यदोषः। अवहिते-रिति भावे क्तः। अवधानैरित्यर्थः। सकर्मकस्यावपूर्वस्य धाधातोः पचत्यादेरिव कर्त्तरि क्तस्य अव्युत्पन्नत्वादिति ध्येयम्। अनुमित्साव्यक्तीनामिव तन्नाशाधिकरणक्षणाना-मपि उत्तेजकविधया पक्षतायां निवेशे गौरवम्। विना अनुमित्साम् अनुमित्युत्पादस्य सन्दिग्धत्वादित्यस्वरसो वदन्ति इत्युक्त्या सूचितः। उत्तानास्तु द्वे द्रव्ये इत्यादि लौकिकप्रत्य-क्षान्यथानुपपत्त्या अपेक्षाबुद्धीनामिव अनुमित्सानाशोत्तरसि-द्धिदशोत्पन्नतत्तदनुमित्यन्यथानुपपत्त्या प्रागुत्पन्नसिषाधयि-षाव्यक्तीनामिव त्रिचतुःक्षणावस्थायित्वं कल्पयितुमुचितम्। विरोधिगुणानां नाश्यनाशकभावस्य विशेषत एव विश्रामात् द्वितीयक्षणे विनाशसामग्रनावश्यकत्वादिति प्राहुः साध्यनि-र्णयेति। साध्यनिर्णयत्वप्रकारकेच्छानन्तरमित्यर्थः। पूर्वोक्त-न्यायेन अनुमित्साप्रागुत्पन्नविशेषणज्ञानादिक्रमेण प्रत्यक्षमिति तत्र तदनन्तरमनुमितिप्रसङ्ग इति परेणान्वयः। तथाविध-प्रत्यक्षस्य विशिष्टानुभवरूपतया तज्जनकविशेषणज्ञानादिकल्पने गौरवादाह स्मरणं वेति। ननु यद्यदिच्छासत्त्वे सिद्धिदशाया-मनुमितिर्जायते तत्तदिच्छाव्यक्तीनामेव उत्तेजकतया पक्षताया-मन्तर्भावात्साध्यनिश्चयत्वप्रकारकेच्छायाः क्वापि पक्षतायामनि-वेशान्नातिप्रसङ्ग इत्यत आह। यत्र वेति। यत्र साध्यवत्-

साध्यव्याप्यवान् साध्यव्याप्यधर्मव्याप्यवांश्च पक्षः पक्षे साध्यानुमितिः तत्र तद्व्याप्यवत्तानुमितिश्चेष्टसाधनमित्येव स्मरणमित्यर्थः। अत्रानुमित्सादशायाम् अनुमितेः वारणार्थं साध्यवत्त्वं निवेशितं मानसत्वावच्छिन्नं प्रत्येवेच्छासामग्र्याः प्रतिबन्धकत्वमते तत्रानुमितेः वारणासम्भवात्। साध्यव्याप्यवत्त्वस्य तद्व्याप्यधर्मान्तरवत्त्वस्य च निवेशोऽनुमित्सोत्तरं साध्यतद्व्याप्यवत्त्वयोरनुमित्यर्थः। अन्यथा परामर्शविरहेणोत्तरकालं साध्यानुमित्यापत्त्यसम्भवात् इष्टसाधनत्वनिवेशः। पुनरनुमित्सायाः सामग्रीसम्पत्त्यर्थं निवेशितमिति द्रष्टव्यं तयोरिति। साध्यतद्व्याप्यवत्त्वयोः इत्यर्थः। अनुमितिप्रसङ्गः। साध्यानुमितिप्रसङ्गः तत्तदिच्छाव्यक्तिसत्त्वेऽपि सिद्धिदशायाम् अनुमित्युत्पादेन तस्या अपि उत्तेजकत्वादिति भावः। भिन्नमते अपि आह योग्यतेति। सुतराम् इति। तत्रानुमितिप्रसङ्ग इत्यन्वयः। अनुमित्सानाशेऽपि अनुमितिमङ्गीकर्त्तुः अनुमित्सासम्भवे सुतरां तदापत्तिसम्भवादिति भावः। तदिच्छेति। यद्यदिच्छाव्यक्तिः उत्तेजिका स्वविषयसिद्ध्यभावविशिष्टत्वं तद्विशेषणमित्यर्थः। यद्यपि एवमपि यत्रोक्तस्थल एव साध्यानुमितिद्वयेष्टसाधनतागोचरस्मरणात् साध्यानुमितिद्वयप्रकारानुमित्सा तत्रैकानुमित्यनन्तरं साध्यानुमित्यनन्तरं न स्यात् प्रथमानुमित्युत्पादेनैव अनुमित्सायाः स्वविषयसिद्ध्यपहितत्वात् तादृशेच्छायाम् उक्तविशेषणाप्रक्षेपेऽपि यत्र प्रात्यक्षिकसिद्ध्युत्तरं वह्न्यनुमितित्वप्रकारेण वह्निप्रत्यक्षगोचराविसंवादिनीच्छा तत्र वह्न्यनुमितिर्न स्यात्। अनुमित्सायाः स्वविषयीभूतप्रात्यक्षिकसिद्ध्युपहितत्वेन तदनुपहितत्वविशिष्टानुमित्साविरहसहकृतायाः सिद्धेः सत्त्वात्। न च येन रूपेण सिद्धेः तादृशेच्छाविषयत्वं तद्रूपावच्छिन्नसिद्ध्यभाववैशिष्ट्यं विवक्षितम्। तथाच वह्न्यनुमितित्वावच्छिन्ना-

भाववैशिष्ट्यस्य तदिच्छाव्यक्तौ सत्त्वात् न दोष इति वाच्यम्। यत्र पक्षे यस्य साध्यस्य प्रत्यक्षं कदाचिदपि न जातं तत्पक्षक-तत्साध्यकप्रत्यक्षव्यतिरिक्तं ज्ञानं जायतामितीच्छाया अनु-त्तेजकत्वापत्तेः। येन रूपेण यत्र इच्छाविषयत्वं तादृशस्य तत्प-क्षकतत्साध्यवृत्ताप्रत्यक्षभिन्नज्ञानत्वस्य अखण्डस्य अप्रसिद्धेः। तथापि उत्तेजकीभूतयद्यदिच्छाव्यक्तौ यादृशयादृशसिद्धिः प्रति-बन्धिका तादृशतादृशसिद्ध्यनुपहितत्वं तत्तदिच्छाविशे-षणं तेन यत्पक्षकयत्साध्यकप्रत्यक्षम् अप्रसिद्धं तत्रापि तादृशप्रत्यक्षभिन्नज्ञानत्वप्रकारिकेच्छायां तत्पक्षकसाध्यकानु-मितिः एव प्रतिबन्धिकास्तीति। तदनुपहितत्वम् एव तदिच्छायां विशेषणमित्यदोषः। ननु यत्पक्षकसाध्यकानु-मित्या कस्यापि न उत्पन्ना तत्र सिद्ध्यभावत्वमपेक्ष्य विशिष्ट-सिद्ध्यभावत्वेन हेतुत्वं गौरवग्रस्तम् अत आह पक्षसाध्ये-त्यादि यत्र इति। ययोः पक्षसाध्ययोरित्यर्थः। सिद्ध्यभावमात्र-मिति गौरवस्य प्रामाणिकत्वमपाकरोति प्रयोजनेति। इदम् उपलक्षणम्। यत्र पक्षे साध्यवत्ताज्ञानोत्तरं कदापि अनु-मितिर्न उत्पन्ना तत्र साध्यवत्ताज्ञानाभावमात्रं कारणं न तु निश्चयत्वम् अपि निवेशनीयम्। एवं यत्रैकविधानुमित्याया उत्तरमेव अनुमितिः तत्र तादृशानुमित्यैव पक्षता तथा यत्पक्षक-साध्यकपरामर्शकालीनसिद्धिदशायाम् अवश्यम् अनुमित्या तत्र पक्षता नानुमितिहेतुरिति द्रष्टव्यम्। यत्तु यत्पक्षकसाध्यकानु-मितिस्थले परामर्शदशायां नियमतः सिद्ध्यभावस्तत्र सिद्ध्य-भावोऽपि न हेतुरिति तन्मन्दम्। तादृशस्थले मानाभावात् योगिनामपि परामर्शदशायाम् अवश्यं सिद्धिसम्भवेन तदभावस्य अहेतुत्वे तेषाम् एव सर्वदा अनुमितिप्रसङ्गादिति ध्येयम्। मिश्रमतम् आक्षिपन्नाह तेनेति। सर्वत्र पक्षतायाम् अनुमित्या-

निवेशस्य निष्प्रयोजनत्वेन इत्यर्थः। धात्वर्थसमानकर्त्तृके-च्छायामेव सनो विधानात् अनुमितिगोचराया अपि ईश्वरे-च्छाया अनुमातृनिष्ठत्वाभावेन सिषाधयिषाशब्देन बोधयितुम् अशक्यत्वादायास इत्युक्तम्। सिषाधयिषानाशेऽपि द्वित्रिक्षणाभ्य-न्तरे सिद्धिसत्त्वेऽपि अनुमितेः सम्पादकं सार्वभौमोक्तप्रकारमु-पन्यस्यति यत् तु इति। सिषाधयिषाविरहविशिष्टो यः स्वक्षणः तदव्यवहितोत्तरक्षणोत्पत्तिकानुमितिको यो यः तद्भिन्नासिद्धि-रित्यर्थः सिषाधयिषाविरहविशिष्टा सिद्धिः तस्याभावः पक्षता इत्यर्थः। अत्र अनुमित्सानाशकालोत्पन्नसिद्धग्रात्मकपरामर्शात् अनुमित्युत्पादार्थं भिन्नान्तं सिद्धिविशेषणम्। सिद्धिमात्रस्य एव प्रायशः स्वक्षणोत्तरयत्किञ्चित्क्षणोत्पत्तिकानुमितिकतया तद्भि-न्नायाश्चरमसिद्धेरभावस्य इदानीं सिद्धग्रात्मकपरामर्शस्थलेऽपि सत्त्वात् अनुमित्यापत्तिरत उक्तम् अव्यवहितेति। सिषाध-यिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरत्वं च सिषाधयिषाविरह-विशिष्टस्वक्षणध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति तादृश-स्वसमयध्वंसाधिकरणत्वं तत्र क्षणपदं विहाय स्वसमयध्वंसाधि-करणकालध्वंसानधिकरणत्वे सति तादृशसमयध्वंसाधिकरण-त्वम् इत्युक्तौ यत्र क्रमेण अनुमित्सासिद्धिपरामर्शानुमितयः तत्र सिद्धग्रुत्पत्तिकालपर्य्यन्तस्थायिनश्च अनुमित्सापूर्वकालोत्-पन्नस्थूलकालोपाधिमादाय परामर्शक्षणेऽपि पक्षताविरह-प्रसङ्गः। सिद्धग्रधिकरणतादृशोपाधेः अनुमित्सापूर्वकालाद्यव-च्छेदेन सिषाधयिषाविरहविशिष्टतया अनुमित्साविरहविशिष्ट-निरुक्तस्वसमयाव्यवहितोत्तरत्वस्य परामर्शक्षण एव पर्य्यवसानात् तदानीञ्च अनुमित्यनुत्पत्त्या तत्सिद्धावपि निरुक्तानुमितिकभि-न्नतया अनुमितेः प्रतिबन्धकत्वात् अतः प्रथमक्षणपदम्। तथा च तत्र सिषाधयिषाविरहविशिष्टः स्वक्षणः परामर्शोत्पत्तिक्षणं

एव इति। तदव्यवहितोत्तरोत्पत्तिकानुमितिकत्वात् न सा सिद्धिविरोधिनीत्यदोषः। सत्यन्तमात्रोक्तौ च सिद्धिमात्रस्य एव प्रायशः स्वक्षणध्वंसाधिकरणकालध्वंसानधिकरणीभूतपूर्व-कालोत्पत्तिकानुमितिकतया तद्भिन्नसिद्धेरप्रसिद्धिः स्यात् अतः स्वसमयध्वंसाधिकरणत्वदलम्। यत्र क्रमेण सिद्धिपरामर्शौ तत्र अनुमितिप्रसङ्गः। परामर्शपर्य्यन्तस्थायिनः प्रहरादिरूपस्थूल-कालोपाधेर्निरुक्तस्वक्षणाव्यवहितोत्तरतया सिद्धिपूर्वदण्डाद्यव-च्छेदेन अनुमित्युत्पत्तिमत्तया च सिद्धेः। स्वक्षणाव्यवहितोत्त-रकालोत्पत्तिकानुमितिकत्वेन अविरोधित्वात् अतो द्वितीयं क्षणपदम्। न च स्थूलकालोपाधेः एव स्ववृत्तियावद्ध्वंसविशिष्ट-तादशायां क्षणत्वात् उक्तदोषतादवस्थ्यम्। यदुपाध्यवच्छिन्नस्य अव्यवहितोत्तरक्षणत्वं तदवच्छेदेन अनुमित्युत्पत्तिमत्त्वस्य विवक्षितत्वात्। क्षणिकान्त्यशब्दानाम् अतिरिक्तपदार्थस्य वा क्षणत्वमते यथाश्रुतार्थस्य एव सम्यक्त्वाच्च। उत्पत्तिपदा-नुक्तौ एकानुमित्युत्पत्त्यनन्तरमपि अनुमित्यन्तरापत्तिः। पूर्वानुमितेः स्वक्षणाव्यवहितोत्तरक्षणवृत्तित्वात्मकत्वेन तद-नुमितिकत्वेन तदन्यसिद्धेरभावादतस्तदुपात्तं न च स्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्वेतरानुमितिकत्वम् एव प्रविश्य-ताम् उत्पत्तेः स्वेतरत्वापेक्षया गुरुत्वादिति वाच्यं यत्र साध्यस्य अनुमितिद्वयं जायतामितीच्छया प्रथमं साध्य-तद्व्याप्ययोरपेक्षाबुद्ध्यात्मिका एकानुमितिः ततः साध्यानु-मित्यन्तरं तत्र साध्यानुमित्यन्तरप्रसङ्गात्। अनुमितिश्च स्वसमानाधिकरणप्रकृतपक्षसाध्यविषयिणी ग्राह्या नातः पुरुषान्तरीयानुमित्यादिकमादायातिप्रसङ्गः। स्वक्षणाव्यव-हितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नस्य प्रागुक्तोत्पन्नव्याप्ति-स्मरणादेः परामर्शमात्रस्थले सत्त्वात् तत्र पक्षतासम्पत्त्यर्थं

सिद्धिपदमितिभावः। ग्रन्थलाघवार्थमन्तिमस्य सिषाधयिषाविरहपदस्य व्यावृत्तिमभिदधान एव प्रथमस्य प्रजोयनं पृच्छति अथेति तृतीयक्षणेति। तृतीयक्षणस्यं व्यवधायक इत्यर्थः। सिद्धीति परामर्शात्मकसिद्धीत्यर्थः सम्प्रतिपत्तय इति। अन्यथा स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिद्धेः सत्त्वात् तत्र पक्षता न स्यादिति भावः। द्वितीयो द्वितीयसिषाधयिषापदेन परित्याज्यः। सिषाधयिषाविरहस्यैकत्वेन द्वितीयत्वायोगात् एवमग्रेऽपि प्राथमिकत्वमिति। सिषाधयिषाविरह इति अनुषज्यते। स्वक्षणस्येति विशेषणमिति अनुषज्यते। यद्यपि सिषाधयिषाविरहविशिष्टं यत् स्वं तदधिकरणाव्यवहितोत्तरत्वादिक्रमेण स्वस्य अपि विशेषणमनुमित्साविरहविशिष्टत्वं सम्भवति तथापि स्वस्मिन् सिषाधयिषाविरहवैशिष्ट्यस्य सामानाधिकरण्यरूपस्य प्रवेशे गौरवात् 'अधिकरणत्वरूपं तद्वैशिष्ट्यं' स्वक्षणस्येत्युक्तम्। यत्र इत्यादि सिषाधयिषासिद्ध्योर्व्युत्क्रमेण अनुमितिप्राक्काले सिद्धिसामान्याभाव एव सम्भवति अतः क्रमेण इत्युक्तम्। सिद्धेः अनुमित्यात्मकत्वेऽनुमित्सायाः स्वविषयसिद्ध्युत्पादेन चरितार्थतयोत्तरकालमनुमितिर्न कस्यापि सम्मता इति व्यर्थम्। तत्र पक्षतासम्पादनमतः प्रात्यक्षिकपदं पक्षतासम्प्रतिपत्त्यर्थमिति। अन्यथा तत्र स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नायाः सिषाधयिषाविरहविशिष्टसिद्धेः सत्त्वादनुमितिर्न स्यात् इति। इत्यञ्च तत्र सिद्धेः सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वात् तदन्यसिद्ध्यभावस्य सत्त्वात् न पक्षताहानिः। न च सिषाधयिषाविशिष्टस्यापि सिद्धिक्षणस्य घटाद्यवच्छेदेन सिषाधयिषाविरहविशिष्टत्वात् उक्तदोषतादवस्थ्यम्। स्वावच्छेदकशरीरावच्छेदेन स्वक्षणे सिषाधयिषाविरहवैशिष्ट्यस्य विव-

च्चितत्वात् इति भावः। अत्र यत्र सिषाधयिषाघटा-दीच्छासिद्धयात्मकपरामर्शानुमितयः क्रमेण जाताः यत्र इच्छा-विरह-विशिष्ट-स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभि-न्नायाः सिषाधयिषाविशिष्टायाः सिद्धेः सत्त्वात् अनुमितिर्न स्यादतः इच्छामपहाय सिषाधयिषापर्य्यन्तमनुसृतम् एवं घटेच्छासिद्धक्षत्मकपरामर्शानुमितिवारणाय द्वितीयसिषा-धयिषायाः प्रवेश इति भावः। प्रसङ्गात् इति। द्वित्रिक्षणा-द्यन्तरितानुमित्यास्थलेऽपि अनुमितिस्वीकारेण इष्टापत्त्य-सम्भवात् इति भावः। उक्तं दोषं निरसितुमाशङ्कते अथेति प्रथममित्यादि। तथाच स्वसमयध्वंसाधिकरणसमयध्वंसाधि-करणसमयध्वंसानधिकरणत्वे सति स्वसमयध्वंसाधिकरणत्वम् एव अव्यवहितोत्तरत्वं वाच्यं तच्च तृतीयक्षणेऽनुमित्युत्पादेऽपि अस्तीति न पक्षताहानिः। स्वक्षणेत्यत्र क्षणपदन्तु स्वसमय-मात्रपरं क्षणत्वपर्य्यन्तप्रवेशस्य निष्फलत्वात् इति भावः। लाघ-वात् आह स्वध्वंसेत्यादि। स्वोत्तरप्रहराद्युत्पत्तिकानुमितिक-सिद्धिदशायां पक्षतावारणाय सत्यन्तं सिद्धिद्वितीयक्षणस्यापि विषयितासम्बन्धेन सिद्धिध्वंसाधिकरणीभूतातीतज्ञानादेः ध्वंसा-धिकरणत्वात् कालपदं कालिकसम्बन्धेन स्वपूर्वप्रहराद्युत्-पन्नानुमितिकसिद्धिदशायां तद्वारणाय स्वाधिकरणेत्यादि-विशेषदलम्। कालपदोपसन्धानात् कालिकसम्बन्धेन अधि-करणत्वलाभस्तेन सिद्धेः पूर्वप्रहरादेर्विषयितया सिद्ध्यधि-करणीभूतस्य अतीतज्ञानादेर्ध्वंसाधिकरणत्वेऽपि न उक्तदोषः। स्वाधिकरणत्वमात्रोक्तौ सिद्धिप्राक्कालवारणसम्भवेऽपि अनु-मित्यन्तरमनुमितेः वारणार्थं स्वाधिकरणकालध्वंसाधिकरण-त्वपर्य्यन्तोपन्यासः। अन्यथा अनुमित्यात्मकसिद्धेः स्वध्वंसाधि-करणकालध्वंसानधिकरणत्वे सति स्वाधिकरणीभूतो यः

स्वोत्पादक्षणस्तदुत्पत्तिकानुमितिकत्वेन तद्भिन्नसिद्ध्यभावस्य सत्त्वादनुमित्यन्तरापत्तिः। एवं स्वाधिकरणमात्रस्य विशेष्यत्वे यत्र अनुमित्सानाशक्षणे इत्याद्युक्तदोषनिरासोऽपि न स्यात् इति ध्येयम्। ननु एवं प्रागुक्तसिद्धिद्वयस्य द्वित्रिक्षण-साधारणनिरुक्तस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतया तदन्यसिद्ध्यभावस्वरूपायाः पक्षतायाः सहजत एव तत्र सत्त्वात् सिषाधयिषाविरहद्वयोपादानं व्यर्थमत आह तथा चेति। वारणायेति तत्रासिद्धेः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वेऽपि सिषाधयिषाविरहविशिष्टो यः स्वक्षणाव्यवहितोत्तरक्षणः तदुत्पत्तिकानुमितिकसिद्ध्यन्तरभिन्नतया विरोधित्वादिति भावः। स्वक्षणस्य विशेषणत्वे तद्दोषतादवस्थ्यादाह उत्तरक्षणस्येति। अनुमित्युत्तरक्षणपर्य्यन्तस्थायिस्थूलकालोपाधेः अपि निरुक्तस्वाव्यवहितोत्तरकालत्वादिकानुमित्यनन्तरम् अन्यानुमितेः वारणार्थं द्वितीयक्षणपदस्यावश्यकत्वात्तदुत्तरकालस्येति न उक्तम् द्वितीयन्तु इति। विशिष्टान्तमित्यनुषज्यते। सिद्धेरिति विशेषणमित्यनुषज्यते सम्पत्तय इति। अन्यथानुमित्साशून्यस्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिद्धेः सत्त्वात् तृतीयक्षणेऽनुमितिर्न स्यादिति भावः। न चैवं यत्र परामर्शात्मकसिद्धेः उत्तरक्षणे तद्धर्मिकसाध्यवत्त्वांशेऽप्रामाण्यग्रहात्मकपरामर्शः ततोऽनुमितिः तत्र तादृशाप्रामाण्यग्रहोत्पत्तिक्षणेऽनुमित्यापत्तेः। तत्रत्यसिद्धिव्यक्तेः सिषाधयिषाविरहविशिष्टो यः स्वाव्यवहितोत्तरक्षणः तदुत्पत्तिकानुमितिकत्वेन तदन्यसिद्धेः प्रागसत्त्वादिति वाच्यम्। अप्रामाण्यग्रहाभावविशिष्टतत्तत्सिद्धिव्यक्तित्वेनापि पक्षतावहिर्भावेनानुमितौ विरोधित्वान्तरस्य वक्तव्यत्वादिति भावः। यद्यपि तृतीयक्षणसाधारणाव्यव-

द्वितीयत्वकल्पे स्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिक-भिन्नाभावस्यैव सम्यक्त्वात्. सिद्धिपदं व्यर्थं परामर्शहेतुभूत-व्याप्तिस्मरणादेः निरुक्तस्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिक-तयैव अप्रतिबन्धकत्वात्। एवञ्च सिषाधयिषाविरहद्वयोपादान-मप्यफलम्। यत्र क्रमेण सिद्धिसिषाधयिषानुमितयः तत्रानु-मित्याजनकस्य फलेच्छादेः एव स्वाव्यवहितोत्तरक्षणोत्पत्तिका-नुमितिकभिन्नस्य सत्त्वादनुमित्योत्पत्तिक्षणेऽनुमित्यसम्भवात्। न च जातेः ध्वंसाद्यप्रसिद्ध्या निरुक्तस्वाव्यवहितोत्तरक्षणोत्पत्ति-कानुमितिकभिन्नस्य आत्मत्वादेः सत्त्वात् परामर्शमात्रादपि अनुमितिर्न स्यादतः सिद्धिपदमिति वाच्यम्। एतावताऽपि तादृशानुमितिकभिन्नसविषयकाभावस्यैव सम्यक्त्वे साध्यवत्त्व-निश्चयात्मिकायाः सिद्धेः प्रवेशानौचित्यात्। तथापि स्वत्वस्या-ननुगतत्वात् तादृशानुमितिकव्यक्तीनां तत्तद्व्यक्तित्वेन भेदा निवेश्याः। तत्र स्वपदेन सिद्धिव्यक्तय एव धर्त्तव्या न तु व्यक्त्य-न्तराणि तावद्भेदप्रवेशे गौरवात्। तथा च स्वाव्यवहितोत्तर-क्षणोत्पत्तिकानुमितिकसिद्धिभिन्नस्य परामर्शादेः सत्त्वेऽपि अनुमितिः न स्यादतः सिद्धिपदम्। न चैवं कार्य्योत्पादकस्य कारणतावच्छेदकाघटकत्वे न वा कार्य्योत्पादादिकं कारण-तावच्छेदककोटौ निविशते इत्यग्रिमग्रन्थस्य भुक्तवान्तत्वा-पत्तिः तत्रादिपदेन स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानु-मितिकतत्तद्व्यक्तिप्रतियोगिकभेदकूटस्याप्युपग्रहात्। एवञ्च क्रमिकसिद्धिसिषाधयिषानुमितिस्थले प्रथमक्षणे पक्षतावारणार्थं प्रथमविशिष्टान्तस्य उत्तरक्षणे विशेषणत्वध्रौव्ये द्वितीयमपि विशिष्टान्तम्। तत्रैव द्वितीयक्षणे पक्षतारक्षणार्थम् आवश्यक-मित्यस्मद्गुरुचरणाः। यत्तु स्वाव्यवहितोत्तरक्षणोत्पत्तिकानु-मितिकभिन्नसविषयकाभावस्य पक्षतात्वे परामर्शादेः अनु-

मितिहेतुता न स्यादित्येककारणपरिशेषापत्तिभियां सिद्धि-पदमिति तन्मन्दम्। यत्र जागरणादाक्षणे स्मरणात्मकपरामर्शा-दनुमितिः तत्र परामर्शोत्पत्तिदशायामेव तदापत्तिप्रसङ्गेन परामर्शादेः अनुमितिहेतुत्वस्यावश्यकत्वात्। तत्र परामर्श-पूर्ववर्त्तिनां निखिलसविषयकाणां स्वाव्यवहितोत्तरक्षणोत्पत्ति-कानुमितिकत्वेन अविरोधित्वादिति। केचित्तु अपेक्षाबुद्ध्या-त्मकपरामर्शचतुर्थक्षणेऽनुमित्यर्थं सिद्धिपदम् अन्यथा तादृश-परामर्शस्यैव निरुक्तानुमितिकभिन्नसविषयकत्वेन प्रतिबन्धक-त्वापत्तिरित्याहुः तन्मन्दम्। चतुर्थक्षणे द्वित्वादिप्रत्यक्षस्यानुत्-पादे तादृशपरामर्शस्यापेक्षाबुद्धित्वे मानाभावात्। अन्यथा अनुमित्योत्तरं सिद्ध्यात्मकस्यैवापेक्षाबुद्ध्यात्मकस्यैव चतुर्थक्षणे सिद्धिनिवेशेऽपि अनुमित्यभावप्रसङ्गात्। ननु यत्र क्रमेण सिद्धिसिषाधयिषानुमितयः तत्र प्रथमक्षणे पक्षतासत्त्वे-पीच्छासामग्र्याः प्रतिबन्धकत्वादेवानुमित्यनुत्पत्तिसम्भवात् प्रथमविशिष्टान्तदलं व्यर्थमत एव द्वितीयस्यापि तथेत्याह यदि पुनरिति। सर्वत्रेच्छाजनकीभूतज्ञानस्य इच्छोत्पत्ति-दशायां साक्षात्कारप्रसङ्गेन मानसत्वावच्छिन्नं प्रत्यक्षसामान्यं वा प्रति इच्छासामग्र्याः प्रतिबन्धकत्वेऽपि अनुमितिं प्रति तस्यास्तथात्वे मानाभावात्। न चेच्छासामग्रीदशायां स्मृति-शाब्दबोधाद्यनुदयात् लाघवेन जन्यज्ञानत्वावच्छिन्नं प्रति एव तस्याः प्रतिबन्धकत्वमतः तत्सत्त्वेऽनुमित्यसम्भव इति वाच्यम्। सत्यामपीच्छासामग्र्यां पश्येयं स्पृशेयं शृणुयाम् इत्यादीच्छाद-शायां जन्यज्ञानोत्पादेन चाक्षुषत्वस्पार्शनत्वश्रावणत्वशाब्दत्वा-दिप्रकारकेच्छाविरहविशिष्टेच्छासामग्रीत्वेन चाक्षुषत्वस्पार्शन-त्वशाब्दत्वादिप्रकारकप्रत्येकधर्मावच्छिन्नं प्रति एव प्रतिबन्धक-तयाऽनुमितिमन्तर्भाव्य इच्छासामग्र्याः प्रतिबन्धकत्वाकल्प-

नात्। जन्यज्ञानत्वावच्छिन्नं प्रति तत्तदिच्छाविरहकूटविशिष्टेच्छासामग्रीत्वेन विरोधितायामिच्छासामग्रीसत्त्वेऽपि पश्येयमितीच्छुः। अतस्तांनुपश्येव साम्यंनस्य शाब्दबोधादेः वा प्रसङ्गात्। जन्यज्ञानस्याविशिष्टत्वात् तथाच अनुमिताविच्छासामग्र्या इवेच्छायामप्यनुमितिसामग्र्या विरोधित्वं सुवचम्। विनिगमकाभावेनैकग्रैमस्य दुष्करत्वादित्याशयेन यदि च इत्युक्तम्। यत्तु अनुमितिसामग्र्यपेक्षयेच्छासामग्रीलघुरिति सैव अनुमितिप्रतिबन्धिका न तु इच्छायामनुमितिसामग्रीगुरुत्वादिति तत्तुच्छं तथाप्यनुमित्साविरहविशिष्टाया एवेच्छासामग्र्या अनुमितिविरोधित्वं वाच्यम्। अन्यथाऽनुमित्साकालीनायामपीच्छासामग्र्यासनुमित्यभावापत्तेः। एवञ्च अनुमित्साकालीनानुमितिसामग्रीदशायामिच्छानुत्पत्त्यर्थमिच्छासामान्यं प्रति त्वयापि अनुमित्साकालीनानुमितिसामग्रीत्वेन अवश्यं विरोधित्वं वाच्यमिति अनुमितिसामग्र्या गुरुत्वस्याकिञ्चित्करत्वादिति ध्येयम्। यद्यपि स्वाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकसिद्धिभिन्नसिद्ध्यभावस्य एव प्रक्रान्तत्वात् उपादातुमुचितो गौरवस्य वक्ष्यमाणलक्षणेऽपि अविशिष्टत्वात् तथापि कार्य्योत्पादस्येव कार्य्याव्यवहितपूर्व्वत्वस्यापि कारणतावच्छेदकत्वं निरसितुं तदन्तर्भावेण पक्षतां निर्वक्ति अनुमित्यव्यवहितेति। प्रकृतपक्षसाध्यकत्वसमानाधिकरणतत्तदनुमित्यव्यवहितपूर्व्ववर्त्तिसिद्धिभिन्नसिद्ध्यभावः प्रकृतपक्षसाध्यकानुमितौ पक्षतेत्यर्थः। प्रकृतपक्षसाध्यकानुमिति-प्रागभावाधिकरण-समयप्रागभावानधिकरणत्वघटितस्य सामान्यतस्तादृशानुमित्यव्यवहितपूर्व्वत्वस्याप्रसिद्धत्वात् तत्तदिति। न च प्रकृतपक्षसाध्यकानुमित्युत्पत्तिकालोत्पत्तिकध्वंसप्रतियोगिकालवृत्तित्वरूपं सामान्यतस्तादृशानुमित्यव्यवहितपूर्व्वत्वं सुवचमिति वाच्यम्। तथापि उत्पत्त्य-

न्तर्गतस्वत्वघटितत्वेन विशेषतो विश्रामात् एवञ्च स्वसमानाधि-करणतत्तदनुमित्यव्यवहितपूर्ववर्त्तित्वावच्छिन्नभेदकूटं प्रकृते नि-वेश्यमिति तत्र स्वपूर्ववर्त्तिसिद्धिकानामनुमितिव्यक्तीनां निवेशः कार्य्यः। न तु सिद्ध्यसमानकालीनानुमितिव्यक्तयोऽपि निवेश्याः। प्रयोजनाभावात् गौरवाच्च इत्यावेदयितुं प्रथमं सिद्धिपदम्। यत्तु प्रकृतपक्षसाध्यकस्वसमानाधिकरणानुमितिसामान्याव्य-वहितपूर्ववर्त्तित्वस्याप्रसिद्ध्या तन्निवेशासम्भवात् वस्तुगत्या तादृशानुमित्यव्यवहितपूर्ववर्त्ति यद्यत् स्वं तत्तद्भेदकूटस्यैव निवे-श्यतया तत्र सिद्धिभिन्नस्य मनःसंयोगादेः प्रतियोगिविधया प्रवेशे गौरवादतः सिद्धिपदमिति मतम् तत्तुच्छं तथा सति कार्य्याव्यवहितपूर्वत्वस्यानिविष्टतया अग्रे तत्तत्कारणतावच्छे-दकत्वखण्डनस्योन्मत्तप्रलपितत्वापत्तेः। द्वितीयन्तु सिद्धिपदं तादृशसिद्धिभिन्नस्य परामर्शमात्रस्य सत्त्वेऽपि अनुमितेरुत्-पत्त्यर्थमन्यथा तस्य एव प्रतिबन्धकत्वापत्तेरिति भावः। प्रथमकल्पं दूषयति तादृशेत्यादि। तत्तद्व्यक्तित्वेन इत्यस्य सिषाधयिषाविरहविशिष्टेत्यादि। तथाच सिषाधयिषाविरहवि-शिष्टतत्तत्सिद्धित्वावच्छिन्नाभावत्वेनेत्यर्थः। यथाश्रुते यत्र क्रमेण सिद्धिसिषाधयिषानुमितयस्तत्र सिषाधयिषाविरहविशिष्टो यः स्वक्षणाव्यवहितोत्तरक्षणस्तदुत्पत्तिकानुमितिकाभिन्नसिद्धेः सिषाधयिषादशायां सत्त्वादनुमित्यपलापापत्तेः। इत्थं च स-कलसिद्धावित्याद्यग्रिमग्रन्थोऽपि सङ्गच्छत इति ध्येयम्। निरुक्त-रूपेति। सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्-पत्तिकानुमितिकसिद्धिभिन्नसिषाधयिषाविरहविशिष्टसिद्धिस-त्त्वेनैव इत्यर्थः। अनन्तेति। अवच्छेदकभेदेनैव कारणत्वस्य नानात्वादिति भावः। न च तत्तत्सिद्ध्यभावकूटत्वेनैकरूपेणैव हेतुत्वम्। अपेक्षाबुद्धिविशेषविषयत्वरूपस्य कूटत्वस्य अपेक्षा-

बुद्धिव्यक्तीनां भेदेन नानात्वसम्भवादिति भावः। ननु प्रामाणिकत्वादानन्त्यं न दोषायेत्यत आह तादृशेति। परामर्शदशायां यस्यां सिद्धौ नानुमित्सावैशिष्ट्यं तत्तात्सिद्धिव्यक्तावनुमित्साविरहविशेषणस्य व्यर्थत्वादित्यर्थः। परामर्शसमानकालीनसिद्धिव्यक्तीनामभावस्य हेतुत्वे मानाभावाच्चेत्यपि द्रष्टव्यम्। ननु सर्वस्यां सिद्धौ न देयमेव तद्विशेषणमत आह तत्तत्समयेति। सिद्ध्यधिकरणतत्तत्क्षणेन समं सम्बन्धव्यक्तीनामित्यर्थः। ननु तत्तत्समयसम्बन्धस्य विरोधित्वे सिद्धिमत इव पुरुषान्तरस्य अपि अनुमितिर्न स्यात् तादृशसम्बन्धस्य अविशिष्टत्वात् अत आह तत्तत्समयावच्छिन्नेति। सिद्धिकालीनतत्तन्मनोयोगादिव्यक्तीनां स्थिरतया सिद्धिविनिगमेऽपि अनुमितिर्न स्यात् अतोऽवच्छिन्नान्तं सिद्धिमत इव जनान्तरस्य अपि तत्तत्समयावच्छिन्नमनोयोगसत्त्वात् तस्यापि अनुमितिर्न स्यात्। अतस्तत्तदिति मनोयोगस्य विशेषणम्। मनोविशेषणत्वे तु तत्तत्समयावच्छिन्नतन्मनःप्रतियोगिकताकसंयोगस्यापि पुरुषान्तरे सम्भवात्। सिद्धिमत इव तस्यापि अनुमित्यभावापत्तेः इति भावः। न च तत्तत्सिद्धित्वेन प्रतिबन्धकत्वमपेक्ष्य तत्तत्समयावच्छिन्नतन्मनोयोगत्वेन प्रतिबन्धकत्वं गौरवादेव परित्याज्यमिति वाच्यम्। तत्र सकलसिद्धावनुमित्साविरहवैशिष्ट्यस्यैव ममापि सर्वस्मिन्मनोयोगे तत्तत्समयावच्छिन्नत्वस्य अनुपादेयतया उभयत्रापि दूषणसमाधानयोश्च साम्यादिति भावः। कस्याश्चिदेति। सिद्धेरनन्तरमनुमितिः इत्यनुषज्यते नियामकाभावादिति नियामकालाभात् इत्यर्थः। विशिष्टाभावस्य विशेष्याद्यभावरूपतया निरुक्ताभावस्य विशेष्यीभूतसिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपत्वे तादृशसिद्धिसत्त्वे कदापि अनुमितिर्न स्यात्। स्वव्याप्यवह्नितोत्तरक्षणोत्पत्तिकानुमितिकांसन्नत्व-

रूपविशेषणाभावस्वरूपत्वे विवक्षितविवेकेनानुमित्युत्पादस्यैव अनुमित्युत्पादप्रयोजकत्वे पर्य्यवसानादात्माश्रय इति भावः। ननु मणिकारमते विशिष्टाभावस्यातिरिक्ततया तस्य सत्त्वासत्त्वमेवानुमितेः उत्पादानुत्पादनियामकं वाच्यमत आह नवेति। कारणसमाजाधीनं तत्तद्धर्मावच्छिन्नकार्य्यस्योत्पादादिकं तत्तद्धर्मावच्छिन्नकार्य्यस्य कारणतावच्छेदककोटौ न निविशते गुरुधर्मेणैव ताद्रूप्येणापि जनकतायामन्यथासिद्धत्वात् इत्यर्थः। तेन ज्ञानोत्पत्त्यादिविशिष्टबुद्धौ ज्ञानोत्पत्त्यादिज्ञानत्वेन हेतुतायां कार्य्योत्पादस्यावच्छेदकत्वेऽपि ज्ञानोत्पत्तिविशिष्टबुद्ध्युत्पत्तित्वेनाप्रवेशान्न दोषः। कार्य्योत्पादादिकमित्यादिपदात् कार्य्याव्यवहितपूर्व्वक्षणवृत्तित्वादेः स्वक्षणाव्यवहितोत्तरक्षणानुत्पन्नकार्य्यकान्यत्वादेश्च परिग्रहः। कार्य्योत्पादादिघटितधर्मेण हेतुत्वे प्रतिबन्धिमाह तथा सतीति। स्वक्षणेत्यादि स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकास्वसमानाधिकरणानुमितियस्य तादृशसविषयकत्वेनेत्यर्थः। कारणत्वं स्यादित्यग्रेणान्वयः। स्वक्षणाव्यवहितोत्तरतादृशानुमितिकस्य परामर्शस्यैव सत्त्वादनुमित्युत्तरमनुमितेः वारणाय उत्पत्तिकालावच्छिन्नेति स्वोत्पत्तिक्षणावच्छिन्नेति तदर्थः। उत्पत्त्यवच्छिन्नस्य घटादिज्ञानस्योत्तरमपि अनुमितिः स्यादतः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकेति। स्वक्षणेत्यत्र क्षणः समयमात्रं न तु क्षणत्वं निवेश्यम् वैयर्थ्याद् अनुमितेः अपि स्वसमयाव्यवहितोत्तरीभूतस्वस्थितिक्षणपर्य्यन्तस्थायिप्रहराद्युत्पत्तिकानुमितिकतया ततोऽपि अनुमित्यन्तरापत्तिः अतो द्वितीयं क्षणपदम् अनुमितेः अपि स्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्वात्मकानुमितिकत्वात् तदुत्तरानुमित्यन्तरस्य वारणाय उत्पत्तिपदम्। न च स्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्वेतरानुमितिकत्व-

मेव तदर्थं उच्यतामिति वाच्यम्। यत्र साध्यानुमितिद्वयं जायतामितीच्छया साध्यतद्व्याप्यवत्त्वयोः अपेक्षाबुद्ध्यात्मकानुमित्यनन्तरं साध्यमात्रस्यानुमितिः तत्र साध्यस्यानुमित्यन्तरप्रसङ्गात्। पूर्वानुमितेः त्रिक्षणस्थायित्वात् अत्रोत्पत्तिश्च आद्यक्षणसम्बन्धः आद्यक्षणसम्बन्धत्वं च स्वाधिकरणसमयध्वंसानधिकरणत्वमात्रं न तु स्वाधिकरणत्वमपि प्रवेश्यं वैयर्थ्यादिति द्रष्टव्यम्। स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकपुरुषान्तरानुमितिकाद् घटादिज्ञानादनुमितेः वारणाय स्वसमानाधिकरणेति। एकत्र पुंसि तादृशानुमितिकस्य द्वित्वस्य पुरुषान्तरेऽपि सत्त्वात्। तत्रानुमितेः वारणाय सविषयकेति। सिद्ध्यात्मकपरामर्शानुमित्यनुमितीनां क्रमिकस्थले तादृशज्ञानासम्भवात्। ज्ञानत्वापेक्षया गुर्वपि सविषयकत्वं निवेशितम्। न चैतस्य स्वत्वद्वयघटितत्वादुक्तरूपेण हेतुतायां गौरवमिति वाच्यम्। स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिसामानाधिकरण्ये तात्पर्य्यादिति भावः। कार्य्योत्पादस्य कारणतावच्छेदकत्वे प्रतिबन्धिमुक्त्वा कार्य्याव्यवहितपूर्वत्वस्य तथात्वे प्रतिबन्धिमाह स्वसमानेत्यादि। अत्रापि उत्पत्त्यवच्छिन्नत्वविशेषणम्। अत्र तादृशानुमित्यव्यवहितपूर्वत्वं न तादृशानुमितिप्रागभावाधिकरणसमयप्रागभावानधिकरणत्वे सति तादृशानुमितिप्रागभावाधिकरणत्वरूपमप्रसिद्धत्वात्। किन्तु तादृशानुमित्युत्पत्तिक्षणोत्पन्नध्वंसप्रतियोगित्वं तथाच सिद्धिमात्रादनुमित्यापत्तिः। तस्यापि स्वसमानाधिकरणानुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगिप्रहरादिकालोत्पन्नत्वात्। अतः क्षणपदं यत्र परामर्शेन स्वनाशक्षणेऽनुमितिः जन्यते तत्र द्वितीयक्षणेऽपि अनुमित्यापत्तिः। परामर्शस्यैव स्वसमानाधिकरणानुमित्यव्यवहितप्राक्क्षणवृत्तेः उत्पत्त्यवच्छिन्नस्य सत्त्वादुक्तमुत्पन्नेति। न च

सत्त्वस्याननुगतत्वादुक्तरूपेण हेतुत्वमसम्भवीति वाच्यम्। यत्तु अतत्त्वादेः इव स्वत्वस्यापि अनुगतत्वमङ्गीकृत्यैव दूषणोपक्रमात् अन्यथा तत्तद्व्यक्तित्वेन स्वपदार्थस्य प्रवेशे कार्य्योत्पादादेः गुरुत्वादेव कारणतायामप्रवेशसम्भवे अन्यथासिद्धिमुद्रया तदीयावच्छेदकत्वखण्डनस्योन्मत्तप्रलपितत्वापत्तेः इति भावः। आदिपदलभ्यस्य स्वक्षणाव्यवहितोत्तरक्षणानुत्पन्नकार्य्यकारणतावच्छेदकत्वप्रवेशे बाधकमाह स्वक्षणेत्यादि। स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकास्वसमानाधिकरणानुमितिः येषां तदन्यसविषयकत्वेनेत्यर्थः। अत्राप्युत्पत्त्यवच्छिन्नत्वं विशेषणं प्रवेशनीयमिति नातिप्रसङ्गः। केचित्तु प्रागुक्तस्योत्पत्तिघटकस्वत्वघटितत्वेनानुगतत्वाभावादुक्तं स्वक्षणेत्यादि। नचैकानुमित्युत्तरमनुमित्यन्तरस्य वारणार्थमस्यापि स्वोत्पत्तिकालावच्छिन्नत्वेन विशेषणीयत्वादननुगमतादवस्थ्यम्। स्वोत्पत्तिकालावच्छिन्नत्वेन स्वानुत्पत्तिक्षणावच्छेद्यत्वाभावकूटवत्त्वस्य विवक्षितत्वादित्याहुः। तत्तुच्छम्। अनुगतं स्वत्वमङ्गीकृत्यैव दोषोपक्रमात्। अन्यथा कार्य्योत्पत्त्याद्युपलक्षितायाः तत्तद्व्यक्तेः एव कारणतावच्छेदकत्वे कार्य्योत्पादादेः अवच्छेदकत्वखण्डनस्यासङ्गतत्वापत्तेः। पश्चाद्वक्ष्यमाणस्यापि स्वत्वगर्भत्वेन सन्दर्भविरोधापत्तेरिति दिक्। ननु सविषयकमात्रस्यैव प्रायशः स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणयत्किञ्चिदनुमितिव्यक्तिकतया तदन्यसविषयकस्य संसारिण्यभावात् परामर्शमात्रादपि अनुमितिर्न स्यात्। तादृशक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिसामान्यकभिन्नसविषयत्वेन कारणत्वे तु महागौरवमत आह किं वेति। यत्तूक्तरूपेण हेतुतायामनुमितिसामान्योपधायकत्वं परामर्शस्य न स्यात् विनश्यदवस्थपरामर्शानुमितिस्थले कथितरूपावच्छिन्नस्य तस्यासत्त्वादत आह

किं वेत्यादिकमिति। तन्न। स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिकसविषयकत्वेन हेतुत्वोक्त्या पूर्वमेव परामर्शस्यानुमित्युपधायकतानियमस्य त्यक्तत्वात् तदाशङ्कने सन्दर्भविरोधापत्तेः। अत्रानुमितिपूर्ववर्त्तिनो ज्ञानस्यानुमितिदशायामपि सत्त्वात् तदुत्तरकालानुमितेः वारणार्थं तादृशपूर्ववर्त्तित्वविशिष्टेत्युक्तम्। तथाच तदवच्छिन्नस्य प्रागसत्त्वान्न दोषः। ज्ञानत्वादिनेत्यादिना सविषयकत्वभावनात्वादेः परिग्रहः। ननु प्रथमकल्पे तृतीयक्षणसाधारणस्य प्रागुक्ताव्यवहितोत्तरत्वस्य प्रवेशे व्याप्तिज्ञानमात्रादप्यनुमितिः स्यात् तस्य अपि परामर्शसम्पत्त्या स्वाव्यवहितोत्तरतृतीयक्षणोत्पत्तिकानुमितिकत्वादत आह स्वाव्यहितोत्तरश्चेति। तथाच स्वाधिकरणसमयध्वंसानधिकरणत्वगर्भमेवाव्यवहितोत्तरत्वं निवेश्यमिति भावः। न चेति वाच्यमित्यग्रेणान्वयः। पूर्वोत्पन्नस्यैव परामर्शस्य स्थितिक्षणे अनुमित्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टस्य सम्भवात् किं वेत्यादिकल्पे दोषासम्भवादादिमेषु त्रिषु इत्युक्तम् अतथात्वादिति। स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वाभावात्। स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणोत्पन्नत्वाभावात् स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिकभिन्नसविषयकत्वाभावाच्चेत्यर्थः। तदानीं विरोधिसिद्ध्यादेर्नाशदशायाम् अनुव्यवसायादेरित्यस्य पञ्चम्यन्तस्य तत् सम्भवादित्यनेन योजना अनुव्यवसायादितोऽनुमितिसम्भवादित्यर्थः। आदिना बाह्यप्रत्यक्षान्तराद्युपसङ्ग्रहः। ननु यत्र परामर्शविषयिण्या कामिनीजिज्ञासया परामर्शमात्रम् उत्पाद्य नष्टं तत्र परामर्शोत्तरक्षणे तया प्रतिबन्धात् ज्ञानमात्रस्य एव अनुत्पत्त्या पश्चादनुमितिर्न स्यादत आह अन्ततः संस्काराद्वेति। अन्ततो जीवनयोनियत्नतेरसत्त्वे न च यत्र अवांशे एवोपेक्षात्मक उक्तपरा-

मर्शस्तत्र संस्कारस्य अपि असम्भवः। तादृशस्थले मानाभावात् अनुमित्यात्मककार्य्येण अनुमितस्य संस्कारस्य अन्यथानुपपत्त्या अनुपेक्षात्मकस्य एव तत्र कल्पनात् इतोऽप्यस्वरसमाह किंवेत्यादि कल्पस्यादृतत्वादिति भावः। ननु तादृशानुमितेः संस्कारजन्यत्वे स्मृतित्वापत्तिरत आह संस्कारजन्येति। जन्यत्वं समवायेन ग्राह्यं नातः संस्कारध्वंसे व्यभिचारः। प्रागेव शब्दः सुतरामर्थे निपातितः। निरासादिति प्रत्यभिज्ञायां व्यभिचारादप्रयोजकत्वाच्च। संस्कारजन्यत्वे स्मृतित्वानियमादिति भावः। ननु उक्तप्रतिबन्धिभयाद्भावनिष्ठकारणतायां अवच्छेदकविधया कार्य्योत्पादादिकं मा निविश्यताम् अभावरूपायाः पक्षतायाः कारणतायां तन्निवेशे न किञ्चिदपि वाधकमतस्तत्रापि प्रतिबन्धिमाह स्यादिति। तथा सतीत्यनुषज्यते ज्ञानमात्रस्य एव प्रायशो व्यधिकरणानुमित्यव्यवहितपूर्ववृत्तित्वात्तदन्यस्य प्रलयादेरभावः। परामर्शविधुरे अपि आत्मन्यस्तीति तत्र अनुमितेर्वारणाय स्वसमानाधिकरणान्तम्। अनुमितिश्च पक्षसाध्यादिविशेषनियन्त्रिता ग्राह्या। तेनैकसाध्यानुमितिदशायां सिद्ध्यादिसत्त्वेऽपि न अन्यसाध्यकानुमितेरुत्पादः। तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वलक्षणस्य वक्ष्यमाणाव्यवहितपूर्वत्वस्य अनुमितिस्थूलकालेऽपि सत्त्वात्तद्वृत्तिसिद्धिसत्त्वे अपि अनुमित्यापत्तेरतः क्षणेति। ननु यत्र सामान्यसामग्रीवशात् साध्यतद्व्याप्यवत्त्वयोरनुमित्यात्मकपरामर्शः ततः साध्यस्य अनुमित्यन्तरं जायतामितीच्छा ततो अनुमित्यन्तरं तत्र अनुमित्योत्पत्तिकालेऽपि अनुमित्यापत्तिः। पूर्वोत्पन्नानां सर्वेषामेव तदीयात्मगुणानां तादृशानुमित्यव्यवहितपूर्वक्षणवर्त्तित्वेन अविरोधित्वादत आह स्वसमानेति। तथा च उक्तस्थले प्रथमानुमितिक्षणस्य एव तादृशाव्यवहितपूर्वत्वानधिकरणतया तद्वृत्ति-

त्वविशिष्टस्य परामर्शादेरेव विरोधिनः सत्त्वान्नोक्तदोष इति भावः। अनुमित्युत्पत्तिपर्य्यन्तस्य अपि स्थूलकालोपाधेरपि तादृशानुमित्यव्यवहितपूर्व्वत्वानधिकरणतया तद्वृत्तित्वविशिष्टस्य परामर्शमात्रस्य सत्त्वे अपि अनुमितिर्न स्यादतः क्षणपदम्। ननु तादृशानुमित्यव्यवहितपूर्व्वत्वं तादृशानुमित्युत्पत्तिक्षणोत्पत्तिध्वंसप्रतियोगित्वरूपमेव अग्रे वक्ष्यते। न तु तादृशानुमित्युत्पत्तिकालोत्पत्तिकध्वंसप्रतियोगित्वरूपं तथा सति सर्व्वेषामेव क्षणानां तादृशानुमित्युत्पत्त्यधिकरणीभूतस्थूलकालोत्पन्नध्वंसप्रतियोगितया निरुक्ताव्यवहितपूर्व्वत्वानधिकरणत्वस्य एव दुर्लभत्वापत्तेः। एवं च तादृशानुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वानधिकरणवृत्तित्वविशिष्टत्वेन प्रतिबन्धकत्वमपेक्ष्य तादृशानुमित्युत्पत्त्यनधिकरणसमयोत्पत्तिकध्वंसप्रतियोगिक्षणवृत्तित्वविशिष्टत्वेनैव विरोधित्वं युक्तम्। क्षणद्वयाप्रवेशेन पूर्व्वतो लाघवादित्याशयेनाह स्वसमानेति। अत्र तादृशसमयाव्यवहितपूर्व्वत्वं तादृशसमयोत्पत्तिकध्वंसप्रतियोगित्वमात्रं न तु तादृशसमयोत्पत्तिकालोत्पत्तिकध्वंसप्रतियोगित्वमाद्योत्पत्तेर्वैयर्थ्यान्निष्फलत्वाच्च। समयपदं तु अव्यवहितघटकोत्पत्तेः कालिकसम्बन्धेन वृत्तित्वलाभार्थमन्यथानुमितिपूर्व्वक्षणस्य अपि तादृशानुमित्युत्पत्त्यनधिकरणबुद्ध्यादौ विषयित्वादिसम्बन्धेन वर्त्तमानोत्पत्तिको यो ध्वंसस्तत्प्रतियोगित्वेन तत्क्षणवृत्तित्वविशिष्टस्य परामर्शादेः प्रतिबन्धकतया स्वकालेऽपि अनुमित्यपलापापत्तेरिति ध्येयम्। ननु अनुमित्यव्यवहितपूर्व्वत्वं न तदुत्पत्तिकालोत्पत्तिकध्वंसप्रतियोगित्वं तथा चातिपूर्व्वक्षणस्य अपि अनुमित्युत्पत्त्यनधिकरणस्थूलकालोत्पत्तिकध्वंसप्रतियोगित्वात्। तद्वृत्तिमत्त्वस्य अपि सिद्ध्यादेरप्रतिबन्धकत्वापत्तिरत आह

तदव्यवहितेति। तादृशानुमित्यव्यवहितपूर्वत्वं चेत्यर्थः। शेषकल्पे निरुक्ताव्यवहितपूर्वत्वस्य अप्रविष्टतया सामान्यतो व्यवहितपूर्वत्वस्य निरूपणानौचित्यादिति ध्येयम्। न च जन्याभावत्वलक्षणस्य ध्वंसत्वस्य प्रवेशे वैयर्थ्यमभावान्तराणाम् उत्पत्तिविरहेण एव निरासादिति वाच्यम्। ध्वंसत्वनिरूपकप्रतियोगित्वलाभार्थं तदुपादानात् अन्यथा सर्वेषामेव क्षणानामनुमित्युत्पत्तिकालोत्पत्तिकस्वभेदात्मकध्वंसान्तरप्रतियोगितया अतिप्रसङ्गापत्तेः। ध्वंसत्वस्य अखण्डत्वमते वैयर्थ्याशङ्कानुत्पादात् चेति भावः। न चेति वाच्यमित्यनेनान्वयः। अत्र उक्तेषु मध्ये प्रथम इति। अन्ययोस्तु कल्पयोस्तादृशानुमित्यव्यवहितपूर्वत्वानधिकरणक्षणवृत्तित्वविशिष्टेन स्वसमानाधिकरणानुमित्युत्पत्त्यनधिकरणसमयाव्यवहितपूर्वक्षणवृत्तित्वविशिष्टेन च परामर्शेन एव प्रतिबन्धान्नानुमित्सोत्पादकालेऽनुमितेर्न सम्भव इति भावः। सिद्धे रसत्वे ऽनुमित्सासवधूयानुमितिरेव उत्पद्यते। परामर्शपूर्वं सिद्धिसत्त्वे च सैव तादृशाव्यवहितपूर्ववर्त्तिभिन्नाविरोधिनी भविता इत्यतः त्रिक्षणात्मकेत्युक्तप्रतिक्षणमवश्यं कस्यचित् विनाशोपगमात् तत्पुरुषीयस्येत्युक्तम्। तदुत्पादसमये अनुमित्सोत्पादसमये सा अनुमितिः तादृशपूर्ववर्त्तित्वेन स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवर्त्तित्वेन। यद्यपि अनुमित्साया अभ्युपायेच्छात्वात् तत्कारणीभूतफलेच्छाया एव अनुमितिप्रागवर्त्ति भिन्नायाः सत्त्वान्नानुमित्सोत्पत्तिकालेऽनुमितेरसम्भवः। तथापि सुखात्मिकानुमितिर्जायतामित्याकारिकैव। अत्र सिषाधयिषाबोध्या सा च फलेच्छात्वादेव न फलेच्छान्तरमपेक्षते इत्यदोषः। परामर्शोऽप्यत्र स्मरणात्मको ग्राह्यः। अन्यथा विशिष्टानुभवत्वे तदर्थमपेक्षणीयस्य विशेषणज्ञानादेस्तादृशपूर्ववर्त्ति-

भिन्नत्वेन विरोधित्वसम्भवात् । न च स्मरणात्मकपरामर्शहेतोः संस्कारस्य एव फलनाश्यस्य तादृशाव्यवहितपूर्ववर्त्तिभिन्नत्वसम्भवः । समूहालम्बनसंस्कारजन्यपरामर्शस्य चरमफलत्वाभावेन संस्कारानाशकत्वादिति वदन्ति । यत्तु सिद्ध्यात्मकपरामर्शोऽप्यत्रानुमितिरूप एव ग्राह्यः तथाच फलेच्छादेरपि स्वसमानाधिकरणानुमित्यव्यवहितपूर्ववर्त्तित्वादेव प्रतिबन्धकत्वासम्भात् । अत एव च पुनरनुमितिरिति । अत्र पुनःपदेन सिद्ध्यात्मकपरामर्शस्यानुमितित्वं ग्रन्थकृतैव व्यञ्जितम् । न च सिद्ध्यात्मकानुमितिसत्त्वेऽनुमित्सैव दुर्घटा अनुमित्यन्तरत्वप्रकारेण तत्सम्भवादिति मतं तत्तुच्छम् । अनवरतेत्युत्तरग्रन्थासङ्गतेः । क्षणिकपदार्थानभ्युपगमेन संयोगादीनामपि तादृशपूर्ववर्त्तित्वेन प्रतिबन्धकत्वायोगादिति । यद्यपि स्वावच्छिन्नसमानाधिकरणानुमित्यव्यवहितपूर्ववर्त्तितानवच्छेदकधर्मविशिष्टत्वेन प्रतिबन्धकत्वविवक्षयापि उक्तसिषाधयिषोत्पत्तिकालेऽनुमितेर्वारणं सम्भवतीति स्वोत्पत्तिक्षणावच्छिन्नतत्तत्सिद्धिव्यक्तित्वस्यैव तादृशपूर्ववर्त्तितानवच्छेदकतया तद्विशिष्टायाः सिद्धेः अनुमित्सा पूर्वं सत्त्वात् तथापि यथाश्रुतमेव समाधिसौकर्य्यादाह अनवरतेति । अनवरतम् अनुक्षणम् परिस्पन्दमाना येऽपरिमिताः पवनादिपरमाणवस्तैः सार्द्धं यः चेतनसंयोगस्तदन्तर्गतसंयोगव्यक्तीनामनुक्षणमेव नाशादित्यर्थः । तथाच परामर्शपर्य्यन्तस्थायिन्यः परमाणुतत्तत्संयोगव्यक्तय एव तत्रानुमितिप्रतिबन्धिका इति भावः । ननु तत्र कारणाभावप्रयुक्तः फलानुत्पादः कारणान्तरमेवाक्षिपति अत आह कारणान्तरेति । ननु उक्तक्रमेण कारणतानिश्चये सति तादृशसंयोगोपरमः कल्पनीयः । कारणतानिश्चय एव तत्प्राङ् वर्त्तिनां न सम्भवति अन्वयव्यभिचारसन्दे-

ह्नेन प्रतिबन्धादत आह अन्वयेति। सन्देहस्येति प्रकृताभिप्रायेणाविरोधित्वादिति ग्राह्याभावानवगाहित्वादिति भावः। ननु यत्र पक्षः साध्यवान् साध्यव्याप्यवान् साध्यानुमित्यन्तरं चेष्टसाधनमित्याकारकानुमितिः पश्चात् साध्यानुमित्या ततः साध्यानुमित्यन्तरं तत्र अनुमित्साकालेऽनुमित्यनुत्पादेनान्वयव्यभिचारनिश्चयात् कारणान्तरमवश्यं कल्पनीयम्। क्षणिकपदार्थानभ्युपगमादनुमित्सापूर्वक्षणवर्त्तिनां सर्वेषामेव स्वसमानाधिकरणप्रथमानुमित्यव्यवहितप्राक्क्षणवृत्तित्वेन तद्भिन्नत्वाभावादित्यस्वरसादाह उपादीयन्तामिति प्रतिबन्धकतयेति शेषः। तथाच प्रथमानुमित्युत्पत्तिक्षणसम्बन्धा एव तत्र अनुमित्यव्यवहितपूर्वक्षणवृत्तिभिन्नत्वेन अनुमितिप्रतिबन्धका इति भावः। तत्तदात्मसमयसम्बन्धानामतिरिक्तत्वमतेनेदम्। ननु स्यादित्यादिनोक्तप्रकारत्रयमपि स्वत्वगर्भत्वादननुगतमतः ताद्रूप्येण प्रतिबन्धकतायां नैककारणपरिशेषापत्तिः अत आह भावत्वेति। तत्र च तत्पुरुषीयानुमित्यव्यवहितपूर्वक्षणत्वं स्वप्रागभाववन्निष्ठकालिकसम्बन्धेन तादृशानुमित्याश्रयशब्दत्वं वाच्यमतो नाननुगमाद्यनवकाशः। न च तादृशशब्दस्यानुमितिक्षणेऽपि सत्त्वात् पुनः अनुमित्यापत्तिकार्य्यसहभावेनैव तस्य हेतुत्वात् तादृशशब्दविशिष्टत्वं वा वक्तव्यम्। वैशिष्ट्यं च स्ववृत्तित्वस्ववृत्तिध्वंसप्रतियोगित्वोभयसम्बन्धेन ग्राह्यम्। शब्दस्य चतुःक्षणस्थायित्वमते तु तमपहाय सुखदुःखादीनां द्विक्षणस्थायिगुणानामन्यतममेव निवेशनीयमित्यभिनवः पन्थाः। पूर्वक्षणत्वादिनेत्यादिना तादृशपूर्वत्वानधिकरणक्षणाभावत्वादेः उपग्रहः। परामर्शादेः कारणत्वरक्षामनुसृत्याह तादृशेति। अत्र तत्तत्पुरुषीयानुमितिं प्रति तत्तत्पुरुषीयानुमित्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टत्वेन हेतुतायां कालिकमेव व्यापकत्वं प्रविष्टमतः पुरु-

षान्तरेऽपि तत्पुरुषीयानुमितिः नापादनीया विशिष्टत्वादित्यादिनेत्यादिपदेन तादृशपूर्वत्वानधिकरणवृत्तित्वविशिष्टाभावत्वादेः परिग्रहः। ननूक्तरूपेण कारणतायामिष्टापत्तौ को दोष इत्यत आह। तथा चेति। उपमानादेः इत्यादिशब्दस्य परिग्रहः। सर्वत्रेति उक्तक्रमेणेत्यादिव्याख्याद्यप्रतिसन्धानदशायामुत्पन्नयोः उपमितिशाब्दयोः कारणबाधेनानुमितित्वासम्भवादेव तत्कारणयोः उपमानशाब्दयोः प्रमाणान्तरत्वमिष्यते। प्रागुक्तरूपैः अनुमितिहेतुत्वे कारणबाधासम्भवात् तयोरप्यनुमान एवान्तर्भावः। ननु यत्रोपमित्यादिस्थले नानुमिनोमि किन्तूपमिनोमीत्यादिरेवानुव्यवसायः। तत्रैवोपमित्यव्यवहितपूर्वक्षणस्यानुमित्यव्यवहितपूर्वत्वाभावात् कथं सर्वत्रैव उक्तानुमिति सामग्री अन्यथोपमित्यादिकं प्रत्युपमित्यव्यवहितपूर्वक्षणत्वादिना हेतुत्वकल्पनात्। सर्वत्रैवोपमितिसामग्रीसम्भवादनुमानस्य प्रमाणान्तरत्वं भग्नमित्येव किन्तु रोचयेदित्यत आह विलीयेत चेति। परामर्शत्वादिनेति व्याप्यपक्षोभयवैशिष्ट्यावगाहिनिश्चयत्वेन व्याप्यवत्पक्षनिश्चयत्वेन चानुमितौ हेतुत्वं न स्यादित्यर्थः। प्रागुक्तसविषयकत्वादिनैव परामर्शस्य तथात्वनिर्वाहादिति भावः। बाधत्वादिनेत्यादिपदेन सत्प्रतिपक्षोपसङ्ग्रहः। प्रागुक्तानुमित्यव्यवहितपूर्ववर्त्तिभिन्नत्वेनैव बाधादेः प्रतिबन्धकत्वसम्भवादिति भावः। न च बाधादे र्विशिष्टबुद्धिसामान्यं प्रत्येव विरोधित्वादनुमितित्वावच्छिन्नं प्रति बाधकत्वादिना प्रतिबन्धकत्वं प्रसक्तमेव नेति वाच्यम्। सति बाधे विशिष्टबोधेच्छायां साक्षात्कारिण्या इवानुमित्यादिरूपाया अपि विशिष्टबुद्धेः उत्पत्तिभिया अनुमितित्वावच्छिन्नं प्रत्येव बाधत्वादिना अपृथग् विरोधित्वस्यावश्यकत्वादिति भावः। कार्य्यान्तरेषु शाब्दबोधदाहादिषु अतथात्वसत्कारणत्वमप्रतिबन्धकत्वं च

प्रसज्येत इत्यन्वयः। एवं तथात्वमित्यत्रापि तथाच शाब्दबोधत्वावच्छिन्नं प्रति स्वसमानाधिकरणशब्दाव्यवहितप्राक्क्षणोत्पन्नविषयकत्वेन हेतुत्वे विनश्यदवस्थस्य पदार्थोपस्थित्यादेः शाब्दधीहेतुत्वं न स्यात्। प्रत्युत शाब्दधीप्राक्क्षणोत्पन्नसंस्कारादेः अपि तत्र हेतुता स्यात्। एवं स्वसमानाधिकरणदाहाव्यवहितप्राक्क्षणवृत्तिभिन्नत्वेनैव मण्यौषधादेः दाहाप्रतिबन्धकत्वे कदाचिदुपहितदाहानां मण्यादीनां दाहप्रतिबन्धकत्वं न स्यात्। प्रत्युत ताद्रूप्येणोदासीनस्यापि घटादेः दाहविरोधित्वं स्यादित्यर्थः। अतएव कार्य्याव्यवहितपूर्वत्वादेः कारणतानवच्छेदकत्वादेव द्वितीय इति तादृशानुमित्यव्यवहितपूर्ववर्त्तिसिद्धिभिन्नसिद्ध्यभावमात्रं पक्षतेति ग्रन्थोक्तकल्प इत्यर्थः। द्वितीयप्रकारे दोषान्तरमपि आह॰ वैयर्थ्याच्चेति। स्वसमानाधिकरणतत्तदनुमित्यव्यवहितपूर्ववर्त्तित्वविशिष्टप्रतियोगिकभेदकूटस्य प्रवेशे गौरवात्। स्वप्रागभाववन्निष्ठस्वसामानाधिकरण्यसम्बन्धेन प्रकृतसाध्यकानुमितिविशिष्टत्वलक्षणमेव तादृशानुमित्यव्यवहितपूर्ववर्त्तित्वं द्वितीयप्रकारे लाघवान्निवेश्यम्। तथाच तदवच्छिन्नभिन्नसिद्ध्यभावस्यैव पक्षतात्वसम्भवात् प्रथमं सिद्धिपदं विफलम्। अखण्डाभावघटकत्वेऽपि ताद्रूप्येण हेतुतायां गौरवादिति भावः। यन्नपतिमतं दर्शयति सिषाधयिषा इत्यादि। केवलपरामर्शसत्त्वेऽपि अनुमितिर्न स्यात् तस्यैव अनुमित्साविरहविशिष्टसाधकमानस्य सत्त्वादतोऽनुमानातिरिक्तं पदम् अत्र प्रत्यक्षमानमेव निवेशयितुं युक्तं न तु अनुमितिभिन्नसिद्धिजनकमानमात्रं समानविषये शाब्दादिसामग्रीसम्भवेऽनुमितिरेवोत्पादादत एव एकपदार्थस्य अपरपदार्थसंसर्गव्याप्यवत्त्वस्य योग्यतात्वे संसर्गस्य अनुमितिरेव स्यात्। न तु शाब्दधीरिति। योग्यताग्रन्थे मणिकारैरपि उक्तमिति

वदन्ति। अन्यतरस्येति। इत्थं च साधकं सिद्धिमानं च सिद्ध्यात्मकमितिजनकप्रमाणम् इत्युभयमेव मूलस्थसाधकमानशब्दस्यार्थं इति भावः। तदुपहितमिति। तया सिद्ध्या उपहितं विशिष्टं पक्षतावच्छेदकसामानाधिकरण्येन सिद्धिविशिष्टं सत् तादृशसिद्धिजनकमिति यावत्। तत्सामग्री अनुमित्यन्यसिद्धेः सामग्री चक्षुरादि इत्यादिना पदज्ञानादेरुपग्रहः। ननु सिद्ध्यनुपधानदशायां सिद्धिजनकस्य प्रत्यक्षसामग्र्यादेः पृथगेव अनुमितिविरोधित्वं वाच्यम्। स्वजन्यैकसिद्ध्युपहितया प्रत्यक्षसामग्र्या सिद्ध्यन्तरजननदशायामनुमितेर्वारणार्थमेव निरुक्तसाधकमानस्य पक्षतायां प्रवेश्यत्वादत आह अनुमानेति। वैयर्थ्यादिति साधकमानस्य परामर्शादेरनुमितेः पूर्वं तद्वै शिष्याभावादेरविरोधित्वासम्भवाद्दिति भावः। अनुमितिभिन्नसिद्धिप्राक्क्षणावच्छिन्नत्वमेव तादृशसिद्ध्युपहितत्वम् इत्युक्तौ नातिप्रसङ्गः न वा वैयर्थ्यमिति ध्येयम्। अनुमितिसामग्र्यभावत्वेनेत्यादि। अन्यथा वह्न्यादेः सन्निकर्षदशायामनुमित्सयापि अनुमितिर्न स्यादिति भावः। प्रत्यक्षसामग्र्यभावत्वेनेति। अन्यथा समानविषये सत्यामपि प्रत्यक्षसामग्र्यामनुमित्युत्पादप्रसङ्गाद्दिति भावः। अन्योन्याश्रयादिति। अनुमितिसामग्र्यभावत्वेन "प्रत्यक्षहेतुताग्रहोत्तरमेव प्रत्यक्षसामग्रीमवगत्य तदभावत्वेन अनुमितिहेतुत्वं ग्राह्यम्। अनुमितिसामग्रीज्ञानञ्च अनुमितिं प्रति प्रत्यक्षसामग्र्यभावत्वेन हेतुताग्रहं विना नेति अन्योन्याश्रयादुक्तरूपेण कार्य्यकारणभावग्रहासम्भवादित्यर्थः। अथ अनुमितिसामग्र्यभावातिरिक्तं प्रत्यक्षहेतोः स्तोममेव प्रत्यक्षसामग्रीपदेन उपादाय सिद्धितदन्यतरत्वावच्छिन्नाभावस्य पक्षताद्धिया अनुमितिहेतुत्वं ग्राह्यमतो न अन्योन्याश्रय इत्यत आह स्थाणुत्वेनेति। आरोपक्षणेति अनु-

मितिमात्रस्य एव अनुत्पत्तिभिया सिद्धिप्रत्यक्षसामग्र्यन्यतराभावस्य कार्य्यसहवर्त्तित्वेन हेतुत्वासम्भवादिति भावः। प्रतियोग्यारोपभिन्नस्य प्रत्यक्षकारणस्तोमस्य एव प्रत्यक्षसामग्रीपदेन अभिधानात्। प्रतियोग्यारोपस्य अभावप्रत्यक्षं प्रति हेतुत्वे मानाभावाच्च इदं न युक्तमित्यस्वरसेन कश्चिदिति उक्तं स्वयं दूषणमाह। वस्तुतस्तु इति। ननु स्वातन्त्र्यमनन्यथासिद्धत्वं तच्च प्रत्येकाभावस्यान्वयव्यतिरेकयोः विवादग्रस्तमत आह नियमेनेति। अन्यतरत्वेन प्रतियोगिज्ञानात् पूर्वं प्रत्येकप्रतियोगिज्ञानध्रौव्येण प्रत्येकाभावस्यैव प्रथमोपस्थितित्वादित्यर्थः। ननु प्रत्येकाभावाग्रहेऽपि शब्दादिना अन्यतरत्वावच्छिन्नाभावस्य ग्रहसम्भवान्नेदं युक्तमत आह लाघवादिति। प्रत्येकाभावत्वेन हेतुतायाम् अवच्छेदकलाघवादित्यर्थः। प्रत्येकमनुमित्साविरहविशिष्टसिद्ध्यभावत्वेन तथाविधप्रत्यक्षसामग्र्यभावत्वेन च तथात्वम् अनुमितिहेतुत्वमित्यर्थः। ननु प्रत्येकाभावत्वेन हेतुताद्वयमपेक्ष्य अन्यतराभावत्वेन गुरुणाप्येकमेव हेतुत्वं कल्पनार्हं मत आह अन्येऽपीति। अत्र पक्षतायां बाधादेः इत्यादिना सत्प्रतिपक्षसङ्ग्रहः। तथाच अनुमित्साविरहविशिष्टसिद्धेः तथाविधप्रत्यक्षसामग्र्या बाधसत्प्रतिपक्षादेश्च अन्यतमत्वावच्छिन्नाभावत्वे नैवानुमितिहेतुता स्याद्बाधाद्यभावस्य पृथक्कारणत्वे गौरवादित्यर्थः। न च विशिष्टबुद्धिसामान्यं प्रत्येव बाधसत्प्रतिपक्षयोः विरोधित्वात् पक्षताकुक्षौ तन्निवेशानौचित्यमिति वाच्यम् इत्यध्याहार्य्यम्। सति बाधादिनिर्णये बुभुत्सादशायां विशिष्टप्रत्यक्षवत् तादृशानुमित्यादिप्रसङ्गेन विशिष्टानुमितित्वावच्छिन्नं प्रत्यपि बाधादेः विरोधित्वस्यावश्यकत्वात्। वस्तुतोऽत्रान्तर्भावप्रसङ्गादिति ग्रन्थस्य अन्यतरत्वेन प्रतिबन्धकतायामन्तर्भावप्रसङ्गादित्यर्थः। तथाच विशिष्टबुद्धिसामान्ये विशिष्टानुमितित्वाद्य-

वच्छिन्ने वा बाधसत्प्रतिपक्षान्यतरत्वावच्छिन्नाभावत्वेन हेतुताप्रसङ्ग एव ग्रन्थतात्पर्य्यम् अन्यथा तद्विधेयकानुमितित्वावच्छिन्नं प्रत्येव सिद्धिप्रत्यक्षसामग्र्याः तत्प्रकारकानुमितित्वावच्छिन्नं प्रत्येव बाधसत्प्रतिपक्षयोः विरोधित्वात् तावदन्यतमत्वावच्छिन्नाभावत्वेन पक्षतायामनुगतानुमितिहेतुत्वासम्भवादिति ध्येयम्। यद्वा बाधस्य धीविशिष्टधीसामान्यविरोधितया साध्यविधेयकानुमितिं प्रति पक्षताया हेतुतायामन्तर्भावे विपरीतगौरवमाशङ्क्यैव दीधितिकृता बाधादेरित्यत्रादिपदमुपात्तम्। तेन तत्तल्लिङ्गकपरामर्शाभावकालीनतत्तल्लिङ्गकानुमित्साव्यक्तीनां परामर्शधर्मिकतदप्रामाण्यव्यक्तीनां चोपग्रहः। पक्षधर्मिकसाध्यविधेयकानुमितित्वावच्छिन्नं प्रत्येव सिद्धिप्रत्यक्षसामग्रीनिरुक्ततल्लिङ्गकानुमित्सापरामर्शधर्मिकतत्तदप्रामाण्यव्यक्तीनामन्यतमाभावत्वेनाप्यनुमित्यैकरूपेण पक्षतायाः कारणत्वे बाधकाभावादिति फलितार्थः। अथवा ननु सिद्धिप्रत्यक्षसामग्र्योरन्यतरत्वावच्छिन्नाभावस्याखण्डस्य तद्व्यक्तित्वेनैव साध्यविधेयकानुमितिहेतुत्वं वाच्यम्। अतः प्रत्येकाभावत्वेन हेतुतायां न लाघवावकाश इत्यतस्तत्र तत्प्रतिबन्धिमाह अन्यथेति। यद्यखण्डाभावस्य तद्व्यक्तित्वेन हेतुत्वं तदा बाधादेरपि पक्षतायामन्तर्भावः स्यात् सिद्धिप्रत्यक्षसामग्रीबाधादीनामन्यतमत्वावच्छिन्नाभावस्याखण्डस्य तद्व्यक्तित्वेन साध्यविधेयकानुमितित्वावच्छिन्नं प्रति हेतुत्वे बाधकाभावात् प्रतियोग्यविशेषितरूपेणाभावस्य हेतुताया मन्यथासिद्धत्वात् तत्परित्यागस्तु सिद्धिप्रत्यक्षसामग्र्योरन्यतरत्वावच्छिन्नाभावस्याखण्डस्यापि हेतुतायां समान इत्यपि मात्रश्चामपरः पन्थाः। अथाभावद्वयस्य हेतुत्वेऽनुमित्साविरहस्य द्विर्निवेशाद्गौरवम् अन्यतराभावस्य हेतुतायान्तु सिद्धिप्रत्यक्षसामग्र्यन्यतरत्वे नानुमित्साविरहस्य सकृदेव तस्य

विशेषणाल्लाघवमित्याशङ्क्य निषेधति न चेति। अन्यतराभावस्य हेतुत्वपक्षेऽपि अनुमित्साविरहो द्विर्निवेश्य इत्याह शाब्दसिद्धावित्यादिना शाब्दान्यसिद्धिदशायामशाब्दप्रकारिकेच्छैव नोत्पादेया इत्यतः शाब्दसिद्धावित्युक्तं विरहस्येति पृथग्विशेषणताया इत्यग्रेऽन्वयः अनुत्पादादिति। अनुषङ्गवशादनुमितिरनुत्पादादित्यर्थः। प्रकारान्तरेणासम्भवात् स्वसिद्धिकाया एव सिषाधयिषा अनुमितिनिर्वाहकत्वादिति भावः। अनुमितित्वादीत्यादिपदं प्रत्यक्षातिरिक्तज्ञानत्वादिप्रकारिकेच्छासङ्ग्रहार्थं पृथगिति। न च यद्यदिच्छासत्त्वे सिद्धिप्रत्यक्षसामग्र्योरन्यतरदशायामनुमितिः तत्तदिच्छाव्यक्त्यभावकूटविशिष्टस्य सिद्धिप्रत्यक्षसामग्र्योरन्यतरस्याभावः पक्षता। तथाच प्रत्यक्षसामग्रीकालीनायाः शाब्दान्यज्ञानं जायतामितीच्छाव्यक्तेः उत्तेजककोटावप्रवेशादेव तदानीमनुमित्युत्पादासम्भवादनुमित्सायाः सकृदेव विशेषणत्वं सम्भवतीति वाच्यम्। सिद्धिप्रत्यक्षसामग्र्यन्यतरस्थलीयतत्तदिच्छाव्यक्तीनामभावसमुदायैकस्यैकत्र निवेशे तेषां विशेषणविशेष्यभावे विनिगमनाविरहेण महागौरवात् तदपेक्षया सिद्धिस्थलीयतदिच्छाविरहविशिष्टसिद्ध्यभावत्वेन प्रत्यक्षसामग्रीस्थलीयतत्तदिच्छाविरहविशिष्टप्रत्यक्षसामग्र्यभावत्वेनैव हेतुत्वस्यौचित्यादिति भावः। स्वनिवर्त्तकेति। स्वनिवर्त्तकं यत् प्रत्यक्षादि तत्सामग्रीसमवहितत्वात् न उत्तेजकत्वमिति स्वनिवर्त्तकानुमितिसामग्रीसमवहिताया अनुमित्साया उत्तेजकत्वरक्षार्थं प्रत्यक्षादीत्युक्तम् आदिना च शब्दोपमित्यादेः सङ्ग्रहः। अन्यत्वादिनेत्यादिपदेन सिद्धिप्रत्यक्षसामग्र्यन्यतरदशायां यद्यदिच्छाव्यक्तिसत्त्वे चानुमितिः तावदन्यतमत्वरूपस्येच्छानुगमकरूपधर्मस्योपग्रहः। ननु प्रत्येकाभावयोः कारणताद्वयमपेक्ष्यातिगुरु-

ऽपि उक्तान्यतराभावत्वेनैव कारणत्वं युक्तम् बाधसत्प्रतिपक्षा-न्यतराभावत्वेनैव हेतुतास्वीकारेऽपि क्षतिविरहादत आह अन्यतरत्वघटकयोरिति। सिद्धिभेदविशिष्टं यत् प्रत्यक्षसामग्री-भिन्नं तदन्यत्वं प्रत्यक्षसामग्रीभेदविशिष्टं यत्सिद्धिभिन्नं तदन्यत्वं वा सिद्धिप्रत्यक्षसामग्र्यन्यतरत्वमित्यत्र विनिगमकाभावः। तथा-चानुमित्सविरहविशिष्टताद्दृशप्रत्येकान्यतरत्वावच्छिन्नाभावत्वेन हेतुतायामवच्छेदकभेदेन कारणताद्वयं युक्तमिति भावः। ननु प्रतिय गिविनाशकृतैव सिद्धिप्रत्यक्षसामग्र्यन्यतरत्वरूपाखण्डभेद-व्यक्तिः पक्षतायां निविष्टा। तत्र च विशेषणविशेष्यव्यत्यास-शङ्कापि नास्ति। न च प्रतियोगिविनाशकृताखण्डभेदव्यक्ति-मुपादाय पक्षतानिर्वचने प्रतियोग्यविशेषितेन अपि सिद्धि-प्रत्यक्षसामग्रीगगनाद्यन्यतमत्वेन सिद्धिप्रत्यक्षसामग्र्यनुमिति-पूर्ववर्त्तिभिन्नतत्तज्ज्ञानादिघटितान्यतमत्वेन वा अवच्छिन्ना-भावा अपि अनुमितौ हेतवः स्युः तथा च परामर्शत्वादिना अपि अनुमितौ हेतुत्वं स्यादित्युक्तप्रायमिति वाच्यम्। सिद्धि-मात्राभावस्य पक्षतात्वेऽपि ताद्दृशाभावानां हेतुताप्रसङ्गस्य अन्यथासिद्धौ निवेशनीयत्वात्। तन्मते गुरुधर्मावच्छिन्ना-भावत्वेनैव सम्मतेऽपि गुरुधर्मावच्छिन्नप्रतियोगिताकस्यापि अखण्डाभावस्य तद्व्यक्तित्वेन हेतुतायामन्यथासिद्धिसम्भवा-दत आह आत्मनिष्ठ इति भिन्नेनेति। स्वजनकादृष्टवत्त्वा-दिना कालिकरूपेण वेत्यर्थः। कालिकादिघटितसामग्र्याः प्रतिबन्धकत्वे गौरवादाह तत्तदसाधारणेति। चक्षुः संयो-गाद्यात्मिकायाः। प्रत्यक्षसामग्र्या इत्यर्थः। अभावः कारण-मिति प्राक्तनेनान्वयः। ननु प्रत्यक्षासाधारणकारणसमव-हितमनोयोगसिद्ध्यन्यतरयोः समवायसम्बन्धावच्छिन्नाभाव एव हेतुर्वाच्य इत्यत आह मणिविशिष्टस्येति। मनोयोगादेः

-रित्यादिना ज्ञानाद्युपग्रहः। अयोगादिति [एकत्र जनकत्वप्रतिबन्धकत्वयोर्विरोधादिति भावः। यद्यपि आत्ममनोयोगत्वेनानुमितिजनकस्य अपि निरुक्तान्यतरत्वेन तत्-प्रतिबन्धकत्वेऽपि न क्षतिः। एकरूपेणैव तयोर्विरोधा-न्मणित्वापेक्षया गुरुत्वेनैव मणिविशिष्टवह्नित्वेन दाहप्रतिबन्धकत्वाकल्पनात् ;तथापि विशिष्टाभावस्य विशेषणाद्य-भावानतिरिक्तत्वादखण्डतद्व्यक्तित्वेन हेतुत्वासम्भवादुक्तान्य-तरत्वावच्छिन्नाभावत्वेन च हेतुत्वेऽन्यतरत्वांशे विशेषण-विशेष्याभावव्यत्यासेन गुरुतरकार्य्यकारणभावद्वयापत्तेः। सिद्धिप्रत्यक्षसामग्र्योः प्रत्येकाभावत्वेनैव हेतुत्वमित्येव मूलं युक्तमिति ध्येयम्। तथाच इति प्रतिबन्धकतावच्छेदकस-म्बन्धाननुगमे चेत्यर्थः। तयोः सिद्धिप्रत्यक्षसामग्र्योः प्रति-योगितावच्छेदकसम्बन्धभेदादिवत्तदवच्छेदकता घटकसम्ब-न्धभेदादपि अनुगतरूपेण सम्भवं दर्शयितुमाह एवमिति। एकप्रहराद्यवच्छेदेनैकात्मनि सिषाधयिषाविरहविशिष्ट-सिद्धेः सत्त्वे अपि अनुमित्सादशायां पक्षतासम्पत्त्यर्थमेकक्ष-णेति कालपदं पक्षपरमिति। यद्यपि पूर्वक्षणाद्यवच्छेदेनैव अनुमित्साविरहविशिष्टायाः सिद्धेरनुमित्सादशायामपि सत्त्वा-त्तदानीं पक्षता न स्यान्नचानुमित्साविरहेणोपलक्षितायाः सिद्धेः सिषाधयिषादशायां सत्त्वेऽपि न तद्विरहवैशिष्ट्याव-च्छिन्नसिद्धेः सत्त्वं तदानीं विशेषणाभावादिति वाच्यम्। तथा सत्येकक्षणावच्छेदेनेत्यस्य वैयर्थ्यापत्तेः। तथापि सामयिका-त्यन्ताभावानां समवायावच्छिन्नमेवाधिकरणं स्वरूपाख्य-सम्बन्धो न तु अधिकरणमात्रं तथा सति प्रतियोगिसत्त्व-दशायामपि तदधिकरणे तदभावापत्तेः। तदीयसम्बन्धप्रयुक्त-त्वात्तद्वत्त्वस्य इत्याशयेनैकक्षणावच्छेदेनेत्युक्तम्। अत एव रूप-

वत्तानियामकसम्बन्धो न शुद्धसमवायः वाय्वादेरपि रूपवत्तापत्तेः। किन्तु तत्तद्व्यक्तिनिरूपितसमवाय एवेति सिद्धान्तः। यदि च अभावस्य स्वयमेव स्वरूपसम्बन्धः स च प्रतियोगिसत्त्वदशायामधिकरणे न वर्त्तते प्रतियोगिन एव विरोधित्वात् वृत्तिमत इव वृत्तेरव्याप्यवृत्तित्वात् सामयिकत्वमभावस्य न समयघटितस्वरूपसम्बन्धेन वृत्तिमत्त्वगौरवात् परन्तु समयविशेषावच्छेदेन स्वरूपसम्बन्धेन वृत्तिमत्त्वं गोत्वाद्यभावानान्तु वृत्तिर्न समयावच्छिन्ना मानाभावात् भावाभावयोरेकधर्मिणि सत्तायामेव विरोधभञ्जनार्थमवच्छेदकत्वस्वीकारात्। इदानीमश्वे गोत्वं नास्तीत्यादि प्रतीतौ चाधिकरणत्वेनैव समयस्य भानादिति विभाव्यते। तदेकालवृत्तित्वलक्षणस्य वैशिष्ट्यस्य सामयिकत्वप्रदर्शनार्थमेव एकक्षणावच्छेदेन इत्युक्तं न तु वैशिष्ट्येऽपि तदन्तर्भाव इत्यस्मद्गुरुचरणाः। अन्यादृशं स्वाश्रयनिष्ठादृष्टजन्यत्वादिरूपं न च अनुमित्साविरहविशिष्टसिद्धेरनुमित्साविरहविशिष्टप्रत्यक्षसामग्र्याश्च अन्यतरत्वावच्छिन्नाभावत्वेन हेतुत्वाद् द्विविधस्य वैशिष्ट्यस्य प्रवेशेऽपि नाननुगम इति वाच्यम्। प्राक्क्षणावच्छेदेन सिषाधयिषाविरहविशिष्टा या सिद्धिः प्रत्यक्षसामग्री वा तस्याः सिषाधयिषाविरहविशिष्टतादशायामपि निरुक्तान्यतरत्वेन प्रतिबन्धकत्वात्। तदुत्तरक्षणे अनुमित्यपलापापत्तेः। न च सिषाधयिषाविरहविशिष्टतादशायां सिद्धेः सिषाधयिषाविरहविशिष्टान्यत्वमेव भेदस्याव्याप्यवृत्तित्वात्। तथाच तदानीं निरुक्तान्यतरत्वावच्छिन्नं नास्त्येवेति वाच्यम्। तथापि निरुक्तान्यतराभावत्वेन हेतुत्वे गुरुतरकार्य्यकारणभावद्वयापत्तितादवस्थ्यात्। विशिष्टाभावस्याखण्डस्य प्रमाणाभावेन निरस्तत्वादिति भावः। नन्वनुमित्साविरहविशिष्टप्रत्यक्षादिसामग्र्यभावोऽपि पृथक्प्रक्कतानुमितिहेतुस्त-

द्दा मूलस्थसाधकमानपदेनापि सामग्रीविशेष एवाविधीयतां यथाश्रुतानुरोधात्। ननु साध्यवत्तानिश्चय इत्यत आह साम- ग्रीविशेषेति। लाघवादिति अनुमानातिरिक्तसिद्धिसामग्री- मपेक्ष्य सिद्धेः प्रविशे लाघवादित्यर्थः। तथाच प्रत्यक्षपदवृत्ति- निमित्तनिर्वचनानुरोधादेव साधकमानपदेन साध्यनिश्चयो व्याख्यात इति भावः। प्रवृत्तिनिमित्तनिर्वचने मूलस्वरसमाह एतदेवेति। अन्यथानुमितिकरणमिदमित्येव ब्रूयात् एव तत्रापि यद्यपि इत्याद्युक्तशङ्काव्युदाससम्भवादिति भावः। नन्वेवमपि लाघवाद्बाधनिश्चयाभाव एव पक्षपदप्रवृत्तिनिमित्तमस्त्वित्यत आह फलानुपहितेति। स्वविषयसिद्ध्यनुपहिततत्तदनुमित्सा- विरहविशिष्टेत्यर्थः। विशिष्टबुद्धिसामान्यं प्रत्येव बुभुत्साविरह- विशिष्टबाधनिश्चयाभावत्वेन हेतुत्वमतेऽपि लाघवमाविष्कर्त्तु- मनुपहितान्तानुसरणं न निविशत इत्यस्य पक्षपदशक्यताव- च्छेदकतायामित्यादिः। ननु सिद्ध्यभावस्य पक्षतात्वेऽपि सिद्धि- दशायां पर्वतादौ पक्षव्यवहारो दुर्वारः समवायावच्छिन्न- सिद्ध्यभावस्य विशेषणतायाः पर्वते सत्त्वात् न च तदीय- सिद्धिविशेष्यत्वाभाव एव तं प्रति पक्षव्यवहारनिमित्तं तस्यानु- मित्यहेतुत्वात्। अनुमितिहेताविव पक्षतायाः प्रवृत्तिनिमित्त- त्वात् पक्षतानुमितिहेतुरित्यादिव्यवहारादाह विशिष्टेति। अनुमित्साविरहविशिष्टेत्यर्थः। परम्परासम्बन्धादिति। तथाच यदा यत्र पुंसि निरुक्तसिद्ध्यभावस्तत्कालावच्छेदेन तत्पुरुषीय- स्वप्रतियोगिविशेष्यत्वाभावरूपपरम्परासम्बन्धेन निरुक्तसिद्ध्य- भाववत्त्वं तत्कालावच्छेदेन तत्पुरुषं प्रति पक्षव्यवहारनिमि- त्तमिति भावः। ननु सिषाधयिषाविरहाविशिष्टप्रत्यक्षादि- सामग्र्यभावस्य पृथगपि हेतुत्वं दुर्घटम्। पुमन्तरावच्छेदेनानु- मित्साविरहविशिष्टायाः प्रत्यक्षसामग्र्याः सत्त्वदशायामनुमि-

च्छासत्त्वेऽनुमित्यपलापापत्तेः। न चानुमित्साकालीनान्यत्वमेव सामग्रीविशेषणं तथा सति पुमन्तरेऽनुमित्सादशायां तद्विधुरस्यापि पुंसः प्रत्यक्षसामग्रीसत्त्वेऽप्यनुमित्यापत्तेः। अतः पुरुषविशेषान्तर्भावेण सामग्र्यभावहेतुत्वं निर्वक्ति एकस्येत्यादिना। तद्विरहिणः अनुमित्साविरहिणः। तत्पुरुषीयेत्यादि अत्र तत्पुरुषीयत्वं तत्पुरुषावच्छिन्नत्वं तदनुमित्साविरहस्यैव विशेषणं तेन तत्पुरुषावच्छेदेनानुमित्साविरहकालीनो यः तत्पुरुषीयप्रत्यक्षसामग्रीविशेषस्तद्विरहः पर्य्यवस्यति। यथाश्रुते तत्पुरुषीयत्वस्यानुमित्साविशेषणत्वे तत्पुरुषीयानुमित्सादशायामपि घटावच्छेदेन तदभावसत्त्वात्। तदानीन्तनप्रत्यक्षसामग्र्या अपि तदीयानुमितिं प्रतिबन्धकत्वापत्तेः। पक्षतायामिवात्राप्यनुमित्साव्यक्तयो विशेष्यनिवेश्याः तेन वस्त्वन्तरस्यापि परामर्शदशायामनुमितित्वादिप्रकारकेच्छासत्त्वेऽपि सन्निकृष्टस्य वह्न्यादेर्नानुमितिर्न वा वह्नेरनुमित्साप्रत्यक्षेच्छयोः सत्त्वदशायामुभयसामग्रीसमवधानेऽनुमितिस्तत्र अनुमित्साव्यक्तेरुत्तेजककोटावप्रवेशात् प्रत्यक्षबुभुत्साविरहविशिष्टाया एवानुमित्साया उत्तेजकत्वाददोष इत्यपि कश्चित्। सिद्धिसामग्रीमात्रस्याप्रतिबन्धकत्वादुक्तं विशेषेति। तेन प्रत्यक्षात्मकसिद्धिसामग्रीलाभः। यद्यपि सिद्ध्यात्मकप्रत्यक्षस्यापि सामग्रीमात्रं न प्रतिबन्धकत्वं प्रसिद्धसाध्यकस्थले सर्वत्रैव साध्यवत्त्वोपनीतभानसामग्रीसम्भवात्। नापि लौकिकप्रत्यक्षसामग्री तथा वंशे सर्पत्वव्याप्यवत्तानिश्चयदशायां मण्डूकवसाञ्जनादिबलात् सर्पत्वाद्यलौकिकप्रत्यक्षानुत्पत्तिप्रसङ्गात्। तथा साक्षात्कारत्वनिरूपितसाध्यनिष्ठप्रकारताप्रत्यक्षसामग्री प्रवेश्या तादृशी च कारतालौकिक इव दोषविशेषजन्येऽपि साध्यस्य प्रत्यक्षे वर्त्तत एव। उभयत्रैव सर्पं साक्षात्करोमीत्यनुभवादित्यन्यत्र

विस्तृतम्। न चैवं साध्यस्य निर्विकल्पसामग्र्याः प्रतिबन्धकत्वं न स्यात् दृष्टत्वात् तस्याः पृथक् प्रतिबन्धकत्वोपगमेऽपि प्रत्यभावाच्च अनन्यगतिकतयेति। न चैवं तत्पक्षकसाध्यकानुमितिं प्रत्यनुमित्साविरहविशेषितेन तद्धर्मिकसाक्षात्कारत्वनिरूपितत्प्रकारताकत्वेनैव विरोधित्वम्। तथाच तदभावस्य कार्य्यसहभावेन हेतुत्वादेव न तद्वत्ताप्रत्यक्षस्योत्पत्तिकाले तादृशानुमित्यन्यथागतिरस्त्येवेति वाच्यम्। यत्र पर्वतत्वसामानाधिकरण्येन वह्निमत्ताप्रत्यक्षोत्पादः तत्रोत्तरकाले पर्वतत्वावच्छेदेनापि वह्न्यनुमितेरनुत्पादप्रसङ्गात्। न च पर्वतत्वावच्छेदेन वह्न्यादिसाक्षात्कारत्वेनैव विरोधित्वमिति वाच्यम्। तथा सति पर्वतत्वसमानाधिकरण्येन साध्यवत्ताप्रत्यक्षसामग्रीसत्वेऽपि अनुमित्यापत्तेः। वस्तुतो यत्रानुमित्सानन्तरं साध्यतद्व्याप्यत्वयोः प्रात्यक्षिकपक्षधर्मिकनिश्चयादनुमितिः तत्र कार्य्योत्पत्तिकाले अनुमित्साविरहविशिष्टसाध्यवत्ताप्रत्यक्षाभावस्यासत्त्वात्कार्य्यसहभावेन तदभावस्य हेतुत्वं दुर्घटमेवेति ध्येयम्। अनुगतत्वादिति। मणिमन्त्रौषधीनामुत्तेजकत्वस्याभावादिति भावः। इहापि अनुमितिस्थलेऽपि दर्शित इति। अनुमिनुयां प्रत्यक्षादिभिन्नं वा ज्ञानं जायतामित्यादि नानाविधेच्छाया उत्तेजकत्वस्य प्रदर्शितत्वादिति भावः। यत्पक्षकयत्साध्यकानुमितिस्थले सिद्धिदशायामेकविधैवानुमित्सा तत्र तस्याः तादृूप्येण हेतुतायामनुगम एव सिद्धिदशायां यद्यदनुमित्सासत्त्वेऽनुमितिस्तत्तदनुमित्साविरहकूटत्वावच्छिन्नाभावत्वेन एवानुगतरूपेण वा सिद्ध्युत्तरानुमितिसामान्यहेतुत्वं वाच्यमत आह सिद्ध्युत्तरेति। सिद्धिसामान्याव्यवहितोत्तरत्वमप्रसिद्धं तत्तत्सिद्ध्युत्तरानुमितित्वमननुगतं सिद्ध्युत्तरत्वमात्रं चातिप्रसक्तमिति भावः। सिद्धिस्थितिकालीनामिति स्ववृत्तिप्रागभावप्रति-

योगित्वकालिकोभयसम्बन्धेन सिद्धिविशिष्टामित्यर्थः। प्राग-भावासत्त्वमतोऽप्याह स्वेतरेति। वृत्तिभेदप्रतियोगित्वकालि-कोभयसम्बन्धेन सिद्धिविशिष्टामित्यर्थः। तेन न स्वत्वाननु-गमो दोषः इत्यपि कश्चित्। विनापीति सिद्धिनाशोत्पत्तिकालो-त्पन्नानुमितीनां सिद्धिस्थितिकालीनत्वाभावेनानुमित्सायाः तत्र अप्रयोजकत्वादिति भावः। ननु तदानीमपि कस्यचित् सिद्धि-सत्त्वेन सिद्धिनाशकालीनोत्पन्नानुमितेरपि स्वेतरसिद्धिकालोत्-पत्तिकत्वमेवेत्यनुमित्सां विना तस्याः कथमुत्पादः स्यादत आह एकस्येति। अनुत्पादेति। तदनुमितेरप्यन्यदीयसिद्ध्य-त्तरोत्पत्तिकत्वेनानुमित्साप्रयोज्यत्वादिति भावः। अनन्तेति। तत्पुरुषीयस्वेतरसिद्धिकालीनतत्पुरुषीयानुमितितत्पुरुषीया-नुमित्साया इव तत्पुरुषानुमितिसामान्यं प्रत्यपि वि-नश्यदवस्थतत्तत्सिद्ध्यभावत्वरूपेण हेतुत्वस्यावश्यकतया एक-पुरुषीयानुमितिस्थल एवानन्तहेतुहेतुमद्भावप्रसङ्ग इत्यर्थः। तेन सिद्धिनाशदशायामपि तस्यानुमित्युत्पादस्यानुद्वारा-श्यूनत्वमित्यपास्तम्। ननु सिद्ध्यव्यवहितोत्तरानुमितित्वाव-च्छिन्नं प्रत्येव सिषाधयिषायाः कारणत्वं वाच्यं तदव्यवहितो-त्तरत्वं च स्ववृत्तिप्रागभावप्रतियोगित्वसामानाधिकरण्योभय-सम्बन्धेन विशिष्टायाः कृतेः सामानाधिकरण्यरूपं ग्राह्यमतो नोक्तदोषावकाश इत्यत आह अपिचेति सामग्रीत इति। सिद्ध्यभावस्थलीयानुमितौ क्लृप्तसहेतुताकपरामर्शाद्यात्मककारण-स्तोमादित्यर्थः। ननु विशेषसामग्रीसहिताया एव सामान्यसाम-ग्र्याः कार्य्यजनकत्वनियमात्। प्रकृते च अनुमित्सापरामर्शमात्रा-दप्यनुमित्युदयात्। तथाचोक्तनियमाभावात् सिद्ध्यात्मकविशेष-सामग्रीविरहात् कुतोऽनुमित्यापत्तिरत आह न हीति। ईदृ-शेति। अनुमित्साघटितेत्यर्थः। नास्तीति। विनानुमित्सां परा-

मर्शमात्रादप्यनुमित्युदयात्। तथाचोक्तनियमाभावात् सिद्ध्य-भावस्थल इव सिद्धिस्थलेऽपि विशेषसामग्रीं विनैव सामान्य-सामग्रीमात्रादनुमितिः स्यादेवेति भावः। अन्यत्र सिद्ध्यु-त्तरानुमितावनुमित्साया इव तदनुत्तरानुमितावपि सिद्धि-सामान्याभावस्य हेतुत्वं वाच्यम्। तथाच परामर्शादिसामान्य-सामग्रीसत्त्वेऽपि सिद्धिदशायां निरुक्तविशेषसामग्रीविरहादेव नानुमितिरत आह तदिति। सिद्ध्यनुत्तरानुमितौ सिद्ध्यभाव-रूपसामग्र्यन्तरकल्पने चेत्यर्थः। अतिगौरवमितिशेषः। सामग्री-द्वयकल्पनामपेक्ष्यानुमितिसामान्ये एकस्यैव विशिष्टसिद्ध्य-भावस्य हेतुत्वे लाघवादिति भावः। न च सिद्ध्युत्तरवर्त्ति-तत्तदनुमितिव्यक्तिष्वपि अवश्यं तत्तत्परामर्शादिव्यक्तेर्विशे-ष्यहेतुत्वमुपेयम्। अन्यथा परामर्शादेः सामान्यकारणस्य अवि-शिष्टत्वात् तत्रैकानुमित्युत्पत्तिदशायां भाव्यनुमित्यन्तरापत्तेः। तथाच तत्तत्परामर्शाद्यात्मकविशेषसामग्रीविरहादेव सिद्धि-दशायामनुमित्यापत्त्यसम्भव इति वाच्यम्। यत्र क्रमेण सिद्धि-परामर्शसिद्धिनाशानुमितयस्तत्रत्यान्या एव अनुमितिव्यक्तेः सिद्धिनाशोत्पाददशायामापादनीयत्वात्। तत्तद्व्यक्तिहेतोः परामर्शस्य प्रागपि सत्त्वात्। न च तथाविधानुमितिव्यक्तिषु तत्तत्सिद्धिनाशक्षणस्य तत्तत्क्षणोत्पन्नज्ञानादेर्वा विशिष्यहेतुत्व-कल्पनात्। तदभावादेव न तादृशानुमितिरिति वाच्यम्। क्षणादीनां विशेष्यहेतुताया मन्यथासिद्धत्वात् अन्यथा सर्वत्रैव तत्तत्क्षणसम्बन्धानां विशेष्यहेतुतयैव सामञ्जस्ये विशेषतः कारणान्तरस्य क्वापि कल्पनं न स्यात्। अनन्ततत्तत्क्षण-व्यक्तीनां तत्रोत्पन्नज्ञानादीनां वा विशेष्यहेतुत्वकल्पनामपेक्ष्य विशिष्टसिद्ध्यभावस्य एकस्य एव अनुमितिसामान्यहेतुत्व-कल्पनाया एव लाघवेनौचित्यादिति भावः। नव्यास्तु तत्तदनु-

मित्साविरहविशिष्टसिद्ध्यभावत्वेन हेतुतायां तत्तदनुमित्सा-विरहाणां विशेष्यविशेषणभावेन गुरुत्वादनन्तत्वाच्च। तदपे-च्चया यादृश्यादृशेच्छासत्त्वे सिद्धिदशायामनुमितिः तादृश-तादृशेच्छाविशिष्टानुमितिं प्रति तादृशतादृशेच्छात्वेन सिद्ध्यनु-त्तरानुमितिं प्रति च सिद्धिसामान्याभावत्वेन कारणत्वकल्पनैव लघीयसीति प्राहुस्तच्चिन्त्यम्। शङ्कते इहेति सिद्धिस्थल इत्यर्थः। सा अनुमितिः तत्कारणेत्यस्य अनुमित्सात्मकेत्यादिः सा सिद्ध्य-त्तरत्वावच्छिन्नानुमितिः। प्रागल्भ्य मतं निरस्यति। कारणस्य इत्यादिना। ननु पचतविशिष्टपरामर्शत्वेन इव परामर्श-विशिष्टपचतात्वेनापि विनिगमकाभावेन हेतुत्वापत्त्या द्वयोरेव लाघवात् स्वातन्त्र्येण हेतुत्वमत उक्तं कारणेति। तथा च अनु-मितिकरणस्य व्याप्तिधियः सव्यापारत्वनियमाद् व्यापारविध-येव परामर्शस्य हेतुत्वमावश्यकं पचतायास्तु व्यापारत्वासम्भवात् तदनुरोधेनापि न हेतुत्वमित्येव स्फुटं विनिगमकमिति भावः। न च स्वमते मनस एव अनुमितिकरणत्वात् तत्संयोग एव जन्य-ज्ञानमात्रव्यापार इत्यनुमितौ पचताविशिष्टपरामर्शस्येव परा-मर्शविशिष्टनिरुक्तसिद्ध्यभावत्वेन पचताया अपि हेतुतायां वि-निगमकाभाव एवेति वाच्यम्। परामर्शविशिष्टपचताया हेतु-त्वस्य दुर्वचत्वात्। तत्र हि परामर्शो न सिद्धिविशेषणं तथा सति परामर्शविशिष्टाया निरुक्तसिद्धेरभावत्वेन हेतुत्वे परामर्शशून्य-स्यापि पुंसोऽनुमित्यापत्तेः तस्यापि परामर्शविशिष्टसिद्धेरभाव-त्वात्। न च परामर्शविशिष्टो यो निरुक्तसिद्ध्यभावस्तत्त्वेन हेतुत्वं मिथो वैशिष्ट्यानापन्नयोः सिद्धिपरामर्शयोरभावांशे विशे-षणीभूय अवच्छेदकत्वाभावाद् व्यासज्यवृत्त्यवच्छेदकत्वानङ्गी-कारात् अन्यथा निरुक्तसिद्ध्यभावत्वपरामर्शयोर्द्वयोरेव व्यासज्य-वृत्त्यवच्छेदकत्वेन सामञ्जस्ये तयोर्विशेष्यविशेषणभावे विनि-

गमनाविरहाद् भावनस्योन्मत्तप्रलपितत्वापत्तेः। पक्षताविशिष्टपरामर्शस्य तु वैशिष्ट्यापन्नस्यैवावच्छेदकतया ताद्रूप्येण हेतुतायां बाधकाभावादिति ध्येयम्। प्रतिबन्धकान्तरं बाधनिश्चयादि। ननु कारणतावच्छेदकविशिष्टसत्त्वस्यैव कार्य्योत्पत्तिनियामकत्वात् तत्रैवान्वयव्यतिरेकावपेक्षणीयावत आह अन्यथेति। अन्वयादिसत्त्वेऽपि अहेतुत्वे इत्यर्थः। ध्वंसादिकार्य्यस्य समवायिकारणत्वाप्रसिद्ध्या तन्निमित्तकारणस्य तदवच्छेदकत्वासम्भवादाह यथासम्भवमिति। समवायिकारणत्वादीत्यादिना असमवायिकारणत्वस्योपग्रहः। तथा च घटादिकार्य्यस्य प्रतिनियतदेशत्वरक्षायै तत्तत्कपालद्वयसंयोगादे घटादिहेतुत्वमावश्यकमिति तत्रैव वापदण्डवैमादिकमवच्छेदकं स्यादित्यर्थः। कारणत्वे बाधकसत्त्वात्कारणतावच्छेदिकैव पक्षतेत्यभिप्रायेण साध्यसन्देहः सिषाधयिषैव वा पक्षतेत्याशयेनाशङ्कते अथेति। कार्य्यकालवृत्तेरेवेति अन्यथा पूर्वकाले मण्यभावसत्त्वान्मण्युत्पत्तिकालेऽपि दाहापत्तिरिति भावः। यद्यपि कार्य्यसहवृत्तित्वस्य कारणतावच्छेदकत्वे तदवच्छिन्नस्य चेत् प्रतिबन्धकाभावस्य पूर्वसत्त्वमपेक्षितं तदा सत्यपि मण्याद्यभावे दाहादिकार्य्यं न स्यात्। पूर्वकाले दाहाद्युपहितस्य तस्याभावात् कार्य्यसहवर्त्तित्वोपलक्षितस्य च तस्य पूर्वसत्त्वापेक्षणे तु मण्याद्युत्पत्तिदशायामपि दाहादिकार्य्यप्रसङ्गः। कदाचिद्दाहादि सहवर्त्तिन एव मण्याद्यभावस्य मण्याद्युत्पत्तेः पूर्वं सत्त्वात् तथापि कार्य्यसहवर्त्तित्वस्य न कारणतावच्छेदकत्वं मण्याद्यभावत्वेनैव हेतुत्वात् प्रतिबन्धकाद्यभावविशेषितेन स्वाव्यवहितोत्तरक्षणत्वादिसम्बन्धेनैव च सामग्र्याः कार्य्योत्पत्तिव्याप्यत्वान्न प्रतिबन्धकोत्पत्तिकाले कार्य्योत्पत्तिप्रसङ्गः। समवायादिकारणस्यापि इत्थमेव कार्य्यसहभावेन हेतुत्वं

विवेचनीयमिति दिक्। तत्तद्देशीयतत्तद्दाहादिकं प्रति तत्तद्दा-हाद्युत्पत्तिकालावच्छेदेन तत्तद्देशवृत्तिमण्याद्यभावत्वेन हेतुत्वं कारणतावच्छेदकविशिष्टस्य पूर्वसत्त्वानपेक्षणाच्च प्राक्तत्तद्दाहो-त्पत्तेरसत्त्वेऽपि न क्षतिरित्यनयैव दिशा समवायादिकारणस्या-पि हेतुत्वं निरूपणीयमित्यपि वदन्ति। तदसम्भवादिति निरु-क्तसिद्धप्रभावस्यासम्भवादित्यर्थः। सा अनुमितिः तथात्वेन कार्य्यकालवृत्तित्वेन प्राचां मतेनेदं स्वमते तु मण्युत्पत्तिद-शायां मणिसामग्र्याः प्रतिबन्धकत्वादेव न दाहः संयोगेन म-ण्यभावस्य मण्युत्पत्तिदशायामपि सत्त्वात्तस्य कार्य्यसहवर्त्तित्वेन हेतुत्वोपगमेऽपि अप्रतीकारादिति ध्येयम्। सर्वस्येति तथा-त्वेन हेतुत्वमित्यन्वयः। ननु प्रतिबन्धकाभावत्वस्य ताद्रूप्येण हेतुताव्याप्तत्वाद्गौरवं प्रामाणिकमत आह अन्यथेति। सहभूतस्यैवेति अन्यथा घटादेर्नाशोत्पत्तिदशायामन्यदीय-कर्मादिना तत्र संयोगाद्युत्पत्तौ क्षणिककार्य्यस्वीकारापत्ते-रिति भावः। तथात्वप्रसक्तौ कार्य्यसहभावेन हेतुत्वप्रसक्तौ विजयेरन्निति प्राभाकरैः कारणमात्रस्यैव कार्य्यसहभावेन हेतु-त्वास्वीकारात्। अन्यथा कार्य्यकालसतोऽपि प्रतियोगिनः पूर्ववर्त्तितामात्रेणैव हेतुत्वसम्भवात्तेषामपि अतिरिक्तध्वंसकल्प-नापत्तेरिति भावः। एकपरामर्शादनुमितिद्वयोत्पादेऽपि प्रवाहासम्भवादाह क्वचिदिति। तथा च यत्र पूर्वपूर्वानुमिति-दशायां परामर्शान्तरस्य सामग्रीसद्भावस्तत्रैव परामर्शानुमित्योः प्रवाहसम्भव इति भावः। आनुभविकत्वादिति पक्षतानुमिति-हेतुरित्यग्रेणान्वयः। ननु उक्तस्थले क्रमिको नानुमिति-प्रवाहः किन्तु एकानुमितिनाशोत्तरमपरानुमित्युत्पत्त्यैव स इत्यत आह कालभेदेति। यत्र विषय विशेषे क्रमेणानुमिति-प्रवाहो नानुभवप्रसिद्धः तत्साध्यकानुमितेरेव पक्षताया

हेतुत्वमस्तु इत्यत आह मानाभावाच्चेति। ननु सिद्धेरविरोधित्वे परार्थस्थले तदुद्भावनं न स्यात् प्रमाणादोषत्वात् अत आह परार्थेति। अर्थान्तरेति तथा च निश्चिते वस्तुनि जिज्ञासाविरहादनाकाङ्क्षिताभिधानत्वेन पुरुषदोषतयैव तदुद्भावनं नतु प्रमाणदोषतयेति भावः। अत्रेदमालोचनीयं समानविषयकप्रत्यक्षसामग्रीदशायामनुत्पादाद्वह्न्यादिप्रत्यक्षजनकतत्तदसाधारणकारणव्यक्तीनामिव वह्न्याद्यनुमितिविरोधित्वं वाच्यम्। कालादिसाधारणसामग्र्यास्तथात्वे गौरवात् तथा च वह्निचक्षुःसंयोगादिव्यक्तीनामिव वह्न्याद्यात्मकविशेषणाद्यवगाहितया वह्निमत्तादिप्रत्यक्षहेतूनां पर्वतो वह्निमानित्यादिसिद्धिव्यक्तीनामपि तादृशानुमितिविरोधित्वमावश्यकं विनिगमकाभावात्। एवञ्च तत्रैव पर्वतो वह्निमानित्याकारकनिश्चयत्वेनैवानुगतरूपेण तत्तत्सिद्धिव्यक्तीनां तादृशानुमितिविरोधित्वं कल्प्यते लाघवात्। ननु तत्तत्सिद्धिव्यक्तित्वेन गौरवादित्यवश्यं पक्षतानुमितिहेतुः। न चैवमतिलाघवेन साध्यनिश्चयत्वमपेक्ष्य साध्यवत्ताज्ञानत्वेन एव विरोधित्वमस्तु पक्षे साध्यसन्देहोत्तरं तत्र साध्यवत्तानुमितेरानुभविकतया निश्चयत्वप्रवेशे गौरवस्य प्रामाणिकत्वे तु सिद्धिसत्त्वेऽपि प्रत्यक्षसामग्र्यभावदशायामनुमित्यनुत्पत्तेरनुभवसिद्धतया प्रत्यक्षसामग्र्यन्तर्गततत्तत्सिद्धिव्यक्तित्वेनैव गुर्वपि प्रतिबन्धकत्वं प्रामाणिकमिति वाच्यम्। साध्यवत्तया पक्षज्ञानत्वेन संशयसाधारणधर्मत्वेन प्रतिबन्धकत्वे भ्रमत्वनिश्चयस्योत्तेजकत्वापत्तौ गौरवात्तदपेक्ष्य भ्रमत्वज्ञानानास्कन्दितसाध्यवत्तानिश्चयत्वेन प्रतिबन्धकत्वमेव लघीयः। किञ्च यत्र सिद्धिकालीनेष्ट साध्यव्याप्यवत्तापरामर्शसहकृतव्याप्यत्वाद्यंशे भ्रमत्वादिज्ञानदशायां न साध्यानुमितिस्तत्र

तादृशानुमितिं प्रति विशेषतस्तत्तद्भ्रमत्वज्ञानत्वेनानन्तप्रतिबन्धकत्वकल्पने गौरवात् पक्षधर्मिकसाध्यवत्तानिश्चयत्वेनैवानुगतरूपेण तत्तत्सिद्धिव्यक्तीनां विरोधित्वं कल्प्यते लाघवात्। भ्रमत्वज्ञानानामनुगतरूपेण विरोधित्वासम्भवस्य बहुशोऽन्यत्र प्रतिपादितत्वात्। एवञ्च सत्यामनुमित्सायां सिद्धिसत्त्वेऽपि अनुमित्युत्पादस्य परेषामपि आनुभविकत्वादनुमित्साया-स्तत्रोत्तेजकत्वमपि इत्यवश्यं पक्षतानुमितिहेतुः। न च वह्नेः सिद्ध्यात्मकपरामर्शसहस्रमेव यत्र दण्डो रक्त इत्यादि विशेषणतावच्छेदकप्रकारकं रक्तत्वाद्यंशे भ्रमत्वज्ञानास्कन्दितं वृत्तं तत्रोत्तरकालं रक्तत्वादिविशिष्टवैशिष्ट्यस्य प्रत्यक्षादेर्वारणार्थं तत्तद्भ्रमत्वज्ञानव्यक्तीनां तादृशविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षज्ञानप्रतिबन्धकत्वकल्पनायां तत्रापि गौरवम्। अस्माकन्तु सिद्धेरविरोधित्वादतएव वह्न्यनुमितेरेवोत्पादादन्यत्र क्लृप्ते भिन्नविषयकानुमितिसामग्र्याः प्रतिबन्धकत्वेनैव तत्र रक्तत्वादिविशिष्टवैशिष्ट्यप्रत्यक्षमिति वाच्यम्। यत्पक्षकयत्साध्यसिद्धिपरामर्शदशायां वस्त्वन्तरे कदापि भ्रमत्वाद्यासञ्जनं तत्रैवोक्तक्रमेण पक्षताया हेतुत्वव्यवस्थापनादित्याहुः। यत्तु पक्षताया अनुमित्यहेतुत्वे सिद्ध्यात्मकपरामर्शदशायां भिन्नविषयकप्रत्यक्षादिबुभुत्सादशायाम् अनुमितेर्वारणाय तत्तद्बुभुत्साव्यक्तीनामनुमितिविरोधित्वकल्पने गौरवं स्यादतः पक्षताहेतुरिति तत्तुच्छम्। पक्षतायाः कारणत्वे तत्तदनुमित्साविरहकूटविशिष्टसिद्धित्वेन प्रतिबन्धकतायामिव तत्तदनुमित्साविरहव्यक्तीनां विशेष्यविशेषणभावव्यत्यासेन गुरुतरविशिष्टानन्तविरोधित्वकल्पनायां विपरीतगौरवात् अतएव पक्षताया अनुमित्यहेतुत्वे कश्चितस्थल एव भिन्नविषयकप्रत्यक्षाद्युत्पत्तये तत्तद्बुभुत्साविरहविशिष्टानुमितिसामग्रीत्वेनैव तादृशप्रत्यक्षादौ प्रतिब-

न्धकत्वं कल्प्यमिति। तत्र तत्तदवुभुत्साव्यक्तीनामुत्तेजकत्व-कल्पने गौरवं स्यादित्यपि प्रत्युक्तम्। भिन्नविषयकप्रत्यक्षादिकं प्रति तादृशप्रत्यक्षादिगोचर तत्तदवुभुत्साविरहविशिष्टपरामर्श-त्वेन विरोधित्वमपेक्ष्य निरुक्तपक्षताविशिष्टपरामर्शत्वपर्य्यवसि-तेनानुमितिसामग्रीत्वेन विरोधित्वकल्पनायामेव गौरवादि-त्यास्तां विस्तरः॥ गुरुमते पक्षतायां कारणत्वे युक्तिस्तु आपत्तौ बाधो न कारणम् परन्तु इष्टापत्तिरेव प्रतिबन्धिका तथाच पर्वत-विशेष्यकवह्निविधेयकवुद्धित्वावच्छिन्नं प्रति पर्वतविशेष्यकवह्नि-प्रकारकवुद्धित्वेन प्रतिबन्धकत्वम्। इत्थञ्च अनुमित्यापत्तिसाधा-रणम् एकरूपेणैवेष्टापत्तेः। सिद्धसाधनस्य च प्रतिवन्धकत्वम् न च अनुमितौ इच्छाविरहविशिष्टाया एव सिद्धेः प्रतिबन्धकत्वम् आपत्तौ तु केवलमिष्टापत्तिरेव प्रतिबन्धिकेति कथमुभयं प्रति एकरूपेण प्रतिबन्धकत्वमिति वाच्यम्। अनुमित्साविरह-विशिष्टतादृशवुद्धित्वेन प्रतिबन्धकत्वमिति। तथापि सिद्धि-कालीनपरामर्शानां व्याप्यत्वांशे अप्रामाण्यग्रहसहस्रस्य उत्ते-जकत्वापेक्षया गौरवाभावादिति क्वाचित् कः पाठः।

इति श्रीजगदीशतर्कालङ्कारविरचिता शिरोमणिटीका विवृतिः समाप्ता।

---

अथ श्रीमथुरानाथतर्कवागीशविरचितं पक्षतापूर्वपक्षरहस्यम्।

उपाधिं निरूप्य पक्षधर्मतां निरूपयितुं शिष्यावधानाय प्रतिजानीते 'व्याप्त्यनन्तरमिति व्याप्तिनिरूपणानन्तरमित्यर्थः, क्वचित्तथैव पाठः, 'पक्षधर्मता' पक्षधर्मः पक्षपदस्य शास्त्र-कारीयपरिभाषाविषयतावच्छेदकोऽनुमितिजनको धर्म इति यावत्, भावार्थस्याविवक्षितत्वात्, एतेन व्याप्ति-पक्षधर्मतयो-रनुमित्यात्मकैककार्य्यानुकूलत्वमेव सङ्गतिरिति सूचितम्।

अनुकूलत्वञ्च कारण-कारणतावच्छेदकसाधारणं प्रयोजकत्वं, तच्च कारणतावच्छेदकव्यावृत्तान्यथासिद्धिचतुष्टयरहितत्वे सति नियतपूर्ववर्त्तित्वं, तेन व्याप्तेः अनुमित्यजनकत्वेऽपि न क्षतिः, व्याप्तेर्विषयतासम्बन्धेन परामर्शनिष्ठकारणतावच्छेदकतया यथोक्तप्रयोजकत्वस्य तत्र सत्त्वात्। न चातीतानागतव्याप्तेः परामर्शादप्यनुमित्युदयात् नियतपूर्ववर्त्तित्वघटितयथोक्तप्रयोजकत्वमपि तत्र नास्तीति वाच्यम्। व्याप्तिसामान्ये तादृशप्रयोजकत्वस्यासत्त्वेऽपि सत्तावान् द्रव्यत्वादित्यादौ नित्यसम्बन्धघटितव्याप्तिषु तत्सम्भवात्। न हि निखिलव्याप्त्या समं सङ्गतिरपेक्षिता। वस्तुतस्तु व्याप्तिप्रयोज्यानुमितिजनकत्वमेव पक्षतायां व्याप्तेः सङ्गतिः, व्याप्तिप्रयोज्यत्वञ्च व्याप्त्यवच्छिन्नकारणताप्रतियोगिक-कार्य्यताश्रयत्वम्। उपाधि-पक्षतयोरप्युद्भावनद्वारा विजयलक्षणैककार्य्यानुकूलत्वमेव सङ्गतिः, यथा परकीयहेतावुपाध्युद्भावने विजयस्तथा स्वीयहेतौ पक्षतोद्भावनेऽपि विजयादिति भावः। 'तत्रेति, तच्छब्दो निरूपणपरः, विषयत्वं सप्तम्यर्थः, अन्वयश्चास्य पक्षत्वमित्यनेन, तथाच निरूपणविषयीभूतं पक्षत्वमिदं नेत्यर्थः। पक्षत्वं पक्षपदपरिभाषाविषयतावच्छेदकोऽनुमितिजनको धर्मः, एवं सर्वत्र। 'सन्दिग्धसाध्यधर्मत्वमिति सन्दिग्धं साध्यं येन रूपेण तत्सन्दिग्धसाध्यं सन्देहविशेष्यतावच्छेदकमिति यावत्, तादृशधर्मत्वमित्यर्थः, तथाच विशेष्यतावच्छेदकतासम्बन्धेन साध्यसन्देहवत्त्वं पक्षत्वमिति फलितम्। न चैवं पक्षतायाः पक्षतावच्छेदकनिष्ठत्वमेव वृत्तं न तु पक्षनिष्ठत्वमिति वाच्यम्। अनुमितिकारणीभूतपक्षपदपरिभाषाविषयतावच्छेदकधर्मस्यास्य पक्षपदप्रवृत्तिनिमित्तत्वाभावेन पक्षतावच्छेदक-पक्षयोः सत्त्वासत्त्वेऽपि क्षतिविरहात्, अनुमित्युद्देश्यत्वस्यैव पक्षपदप्रवृत्ति-

निमित्तत्वात्। न च तथापि समानविशेष्यतावच्छेदकत्व-प्रत्यासत्त्या साध्यसन्देहवत्त्वस्यानुमितिहेतुत्वे साध्यं पक्षे न वेति साध्यविशेष्यकसन्देहस्यासङ्ग्रह इति वाच्यम्। 'प्रसिद्ध-साध्यकानुमितिः पक्षविशेष्यकत्वनियमेनानुमितिसमानविशेष्य-तावच्छेदकतया पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यसन्देह-वत्त्वस्यैव तत्रानुमितिहेतुत्वेन तादृशसन्देहस्यासङ्ग्रहस्यैवोचित-त्वात्। न चैवं केवलान्वयिसाध्यके साध्याभावाप्रसिद्ध्या पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यसन्देहासम्भवात् अनु-मितिर्न स्यादिति वाच्यम्। तत्रापि खण्डशः प्रसिद्ध्या अभावा-न्तरे प्रतियोगितासम्बन्धेन साध्यप्रकारकस्य साध्यसन्देहस्य पक्षे सम्भवात्। न च तथापि पृथिव्यामितरभेद इत्याद्य-प्रसिद्धसाध्यविशेष्यकानुमितिस्थले पक्षविशेष्यकसाध्यसन्देहा-सम्भवः इतरत् पृथिवीनिष्ठान्योन्याभावप्रतियोगि न वेति सन्देहस्य पक्षविशेष्यकसाध्यसन्देहत्वाभावादिति वाच्यम्। साध्यविशेष्यकानुमितौ साध्यज्ञानाभावस्यैव पक्षतात्वात्, अत एव उच्छृङ्खलसाध्यज्ञानसत्त्वेऽपि न साध्यविशेष्यकानुमितिः किन्तु साध्यप्रकारिकैवेति न काप्यनुपपत्तिः।

भट्टाचार्य्यास्तु सन्दिग्धः साध्यरूपो धर्म्मो यस्य पुरुषस्य तत्त्वमिति बहुव्रीहिः, धर्म्मपदञ्च स्वरूपकथनं, तथाच समवाय-सम्बन्धेन साध्यसन्देहवत्त्वं पक्षत्वमित्यर्थः, अनुमितिजनक-स्यास्य पक्षपदप्रवृत्तिनिमित्तत्वाभावेन पक्षानिष्ठत्वेऽपि क्षति-विरहात्, साध्यसन्देहपदञ्च पक्षतावच्छेदकावच्छिन्नविशेष्यक-साध्यतावच्छेदकसम्बन्धसंसर्गक-साध्यतावच्छेदकावच्छिन्नप्रका-रकनिर्णयनिवर्त्तनीयसंशयपरं, तेन पक्षः साध्यवान्न वा, साध्यं पक्षे न वा, साध्यं पक्षवृत्ति न वा, साध्यं पक्षनिष्ठाभावप्रति-योगि न वेत्यादीनां सर्व्वेषां सन्देहानामप्रसिद्धसाध्यकस्थले

इतरत् पृथिवीनिष्ठान्योन्याभावप्रतियोगि न वेत्यादिसाध्यप्रतियोगिविशेष्यकसन्देहानाञ्च सङ्ग्रहः, सन्देहपक्षतावादिनामेतदन्यतमसन्देहादेवानुमितिस्वीकारात्। न च साध्यं पक्षे न वेत्यादिसंशयो न तादृशनिर्णयनिवर्त्त्यः समानप्रकारकनिर्णयस्यैव प्रतिबन्धकत्वादिति कुतस्तेषां सङ्ग्रह इति वाच्यम्। सन्देहपक्षतावादिनां प्राचां भिन्नप्रकारकनिर्णयस्यापि प्रतिबन्धकत्वात्। साध्यतावच्छेदकसम्बन्धसंसर्गकेत्युपादानात् साध्यतावच्छेदकसम्बन्धेन निर्णयदशायां सम्बन्धान्तरेण सन्देहसत्त्वेऽपि न पक्षत्वं, तादृशनिर्णयनिवर्त्तनीयत्वञ्च तादृशनिर्णयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वं, तेन पर्वतो वह्निमान् घटवांश्चेति निर्णयनिवर्त्त्यस्य पर्वतो घटवान्न वेति संशयस्य, पर्वतो वह्निमान् वह्नीरूपवांश्चेति समूहालम्बननिर्णयनिवर्त्त्यस्य वह्नीरूपवान्न वेति सन्देहस्य वा पर्वतो वह्निमान् इत्याद्यनुमितौ न पक्षतात्वं, प्रतिबध्यत्वञ्च पक्षतावच्छेदकाघटकतया या साध्यतावच्छेदकविशिष्टविषयिता तद्ग्राह्यं ग्राह्यं, तेन पर्वतो वह्निव्याप्यधूमवान् पर्वतो वह्न्यभावव्याप्यजलत्ववान् इत्याद्यनुमितौ पर्वतो वह्निमान्न वेति संशयस्य न पक्षतात्वं, वह्निव्याप्यधूमकालीनः पर्वतो वह्निव्याप्यधूमवान् इत्यनुमितौ वह्निव्याप्यधूमकालीनः पर्वतो वह्निमान्न वेति संशयस्य पक्षतात्ववारणाय पक्षतावच्छेदकाघटकतयेति विषयिताविशेषणं, संशयत्वेनोपादानञ्च बाधनिश्चयस्यापि पक्षविशेष्यकसाध्यनिर्णयप्रतिबध्यत्वात्तस्य पक्षतात्ववारणाय। न च बाधनिर्णयस्य पक्षतात्वेऽपि सामान्यतो विशिष्टबुद्धिमात्रं प्रति बाधनिश्चयस्य प्रतिबन्धकत्वादेव तत्सत्त्वेऽप्यनुमित्यभावोपपत्तिरिति वाच्यम्। बाधनिश्चये पक्षताव्यवहाराभावात् सन्दिग्धाप्रामाण्यकबाधनिश्चयसत्त्वे सिद्ध्यात्मकपरामर्शादनु-

मित्यग्रपत्तेश्च। अगृहीताप्रामाण्यकत्वेन तादृशनिर्णयनिवर्त्त्यविशेषणे सन्दिग्धाप्रामाण्यकसाध्यसन्देहादनुमित्यनुत्पादापत्तेः। न च सामान्यतः संशयत्वेनोपादानेऽपि वह्न्यभाववान् पर्वतो घटवान्नवेति घटादिसन्देहात्मकबाधनिश्चयस्य पर्वतो वह्निमानित्यनुमितौ पक्षतात्वापत्तिः साध्यसन्देहत्वेनोपादाने च नोक्तसंशयानां सङ्ग्रह इति वाच्यम्। संशयपदेन पक्षतावतावच्छेदकविशिष्टपक्षविशेष्यकसाध्यतावच्छेदकविशिष्टसाध्यवत्त्वग्रहत्वावच्छिन्नविरोधिविषयकनिश्चयान्यज्ञानस्य विवक्षितत्वात्। न चैवं तादृशनिर्णयप्रतिबध्यताया अनुमितेरपि पक्षतात्वापत्तिरिति वाच्यम्। सन्देहपक्षतावादिनामनुमितौ सिद्धेरप्रतिबन्धकत्वात् यथोक्तनिश्चयान्यप्रत्यक्षं वा संशयपदेन विवक्षणीयमतो न काप्यनुपपत्तिरित्याहुः।

केचित्तु सन्दिग्धं साध्यं येन इत्युक्तव्युत्पत्त्या यत्साध्यसन्देहविशेष्यतावच्छेदकं तदेव धर्मो यस्य इति बहुव्रीहिणा साध्यसन्देहविशेष्यतावच्छेदकधर्मवत्त्वमित्यर्थः, यद्वा सन्दिग्धं साध्यं धर्मो यस्येति व्युत्पत्त्या सन्दिग्धसाध्यवत्त्वमित्यर्थः, इत्थञ्च पक्षपदप्रवृत्तिनिमित्तत्वेऽपि अस्य न पक्षतावच्छेदक-पक्षयोरतिप्रसक्त्यप्रसक्ती इत्याहुः। तदसत् आद्ये पर्वतत्वादिरूपेण यत्र महानसादेः पक्षत्वं तत्राव्याप्त्यापत्तेः, पक्षताया अनुमितिजनकत्वेनातीतादौ पक्षे अनुमित्यभावापत्तेश्च। द्वितीये ह्रदो वह्निमान् धूमादित्यादौ बाधितेऽव्याप्त्यापत्तेः अतीतादौ साध्येऽनुमित्यभावापत्तेश्च।

अन्ये तु सन्दिग्धः साध्यरूपो धर्मो यत्र तत्त्वमित्यर्थः, यद्वा सन्दिग्धं साध्यं यत्र तादृशधर्मत्वमित्यर्थः, मतुद्वय एव धर्मपदं स्वरूपकथनं न तु विवक्षितं प्रयोजनाभावात्। आकाशादेः साध्यत्वे पक्षत्वे चाव्याप्त्यापत्तेश्च, तथाच विशेष्यतासम्बन्धेन

साध्यसन्देहवत्त्वं पक्षत्वमिति तु फलितमित्याहुः। तदसत् विशेष्यतासम्बन्धेन साध्यसन्देहस्यानुमितिहेतुत्वे पर्वतत्वरूपेण यत्किञ्चित् पर्वते साध्यसन्देहात् तेन रूपेण पर्वतान्तरेऽनुमित्यनुदयापत्तेः रूपान्तरेण साध्यसन्देहात् निर्णीतरूपेणाप्यनुमित्यापत्तेश्च। यद्यपि साध्यसन्देहस्य पक्षतात्वे यत्र साध्यसन्देहानन्तरं स्मरणादिरूपसिद्धात्मकः परामर्शस्तत्रानुमित्यापत्तिः, मननादिस्थले साध्यनिश्चयदशायां सिषाधयिषयाप्यनुमित्यनुदयापत्तिश्च, तथापि तदुपेक्ष्य स्फुटतरं दोषमाह, 'सन्देहो हीति, 'न विशेषणमिति न तत्तत्पुरुषीयत्वविशेषितः सन् समानविशेष्यतावच्छेदकताप्रत्यासत्त्या अनुमितिकारणमित्यर्थः, भट्टाचार्य्यमते 'न विशेषणं' न समवायघटितसामानाधिकरण्यप्रत्यासत्त्या कारणमित्यर्थः, 'परामर्शपूर्वमिति, लिङ्गविशेष्यकव्याप्तिप्रकारकज्ञानोत्पत्तिसमय इति शेषः, 'लिङ्गदर्शनेति लिङ्गेन्द्रियसन्निकर्षेणेत्यर्थः, 'आदिपदात् तत्समानकालोत्पन्नसंशयजन्यकोटितावच्छेदक-प्रकारकसंस्कारादिपरिग्रहः, 'तस्य नाशादिति तस्य क्वचिन्नाशादित्यर्थः, तेन यत्र संशयाव्यवहितोत्तरमेव स्मरणाद्यात्मको विशिष्टपरामर्शस्तत्र परामर्शक्षणे सन्देहसत्त्वसम्भवेऽपि नासङ्गतिः। न च परामर्शक्षणे सन्देहस्यासत्त्वेऽनुमितिरपि नोत्पद्यत इति वाच्यम्। अनुभवविरोधादिति भावः। 'नोपलक्षणमिति न तु तत्पुरुषीयत्वाद्यविशेषितः सन् निरुक्तप्रत्यासत्त्या अनुमितिजनकमित्यर्थः, भट्टाचार्य्यमते च 'नोपलक्षणं' न कालिकसामानाधिकरण्यमात्रप्रत्यासत्त्या कारणमित्यर्थः, 'अव्यावर्त्तकतापत्तेरिति पक्षे साध्यनिश्चयदशायामनुमितेरव्यावर्त्तकतापत्तेरित्यर्थः, तदानीमपि पुरुषान्तरीयसाध्यसन्देहसम्भवादिति भावः। इदमुपलक्षणं परासन्दिग्धसाध्यकस्थले परामर्शपूर्वं

तदुत्पत्तिसमये वा सन्देहनाशे अनुमित्यनुदयापत्तिश्च तत्र पुरुषान्तरीयसाध्यसन्देहस्याप्यभावादिति बोध्यम्।

'साधक-बाधकेति। साधकप्रमाणं पक्षे साध्यनिश्चयः बाधकप्रमाणं पक्षे साध्याभावनिश्चयः तदभाव इत्यर्थः, न तु वुण्प्रत्ययार्थो विवक्षितः, तथा सति सर्वत्रानुमित्यात्मकसाध्य-निश्चयजनकप्रमाणस्यानुमानस्य साध्य-तद्बाधनिश्चयजनकप्रमा-णस्यात्ममनःसंयोगादेश्च सत्त्वात् अनुमित्यनुत्पादापत्तेः। न च केवलान्वयिनि साध्याभावनिश्चयाप्रसिद्ध्या तदभावस्य हेतुत्वा-सम्भव इति वाच्यम्। खण्डशः प्रसिद्ध्या अभावान्तरे साध्यता-वच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यभ्रमरूपस्य साध्याभावनिश्चयस्य तत्रापि सम्भवात्। न च तथापि बाधक-प्रमाणपदस्य पक्षविशेष्यकसाध्याभावनिश्चयरूपबाधनिश्चय-परत्वे साध्यं पक्षनिष्ठात्यन्ताभावप्रतियोगीति बाधनिश्चयस्या-सङ्ग्रह इति वाच्यम्। तस्य भिन्नप्रकारकतया अनुमित्यप्रति-बन्धकत्वात् असङ्ग्रहस्यैवोचितत्वात्, तत्सत्त्वे क्वचिदनुमित्यनुत्-पादस्य तदुत्तरं पक्षविशेष्यकसाध्याभावनिश्चयस्याप्युत्पादादेव सम्भवात् भिन्नप्रकारस्य तस्य प्रतिबन्धकत्वनयेऽपि साध्याभाव-व्याप्यवत्त्वादिनिश्चयवत्तदसङ्ग्रहे क्षतिविरहाच्च। न हि प्रति-बन्धकमात्रस्यैवाभावः पक्षतायां निवेशनीयः।

केचित्तु 'बाधकप्रमाणपदं यथोक्तबाधद्वयपरमेव, न चैव-मननुगमः, प्रतिबन्धकाभावकूटस्य हेतुत्वेन प्रतिबन्धकाननु-गमस्यादोषत्वात् पक्षतावच्छेदकविशिष्टविशेष्यक-साध्यता-वच्छेदकविशिष्टसाध्यवत्त्वग्रहविरोधिनिश्चयत्वेन वा अनुगम-नीयं बाधनिश्चयाभाववत् साध्याभावव्याप्यवत्त्वादिनिश्चया-भावस्यापि पक्षतायां निवेशे क्षतिविरहात्, तद्व्यावृत्त्या वा विरोधिता निवेशनीया इत्याहुः।

साधक-बाधक-मानाभावपदेन तदुभयत्वावच्छिन्नप्रतियोगिताकाभावो विवक्षितः, प्रत्येकधर्मावच्छिन्नप्रतियोगिताकाभावद्वयं वा विवक्षितं, तत्र नाद्य इत्याह, 'तदुभयेति, तथाच केवलसिद्धिसत्त्वेऽपि बाधकाभावमादाय पक्षतासत्त्वादनुमित्यापत्तेरिति भावः। नान्त्य इत्याह, 'नापीति, 'व्यर्थत्वादिति अनुमितित्वावच्छिन्नं प्रति जनकताकल्पनाया व्यर्थत्वादित्यर्थः। ननु ह्रदो वह्निमान् धूमादित्यादावनुमितिवारणायानुमितित्वावच्छिन्नं प्रति तज्जनकत्वमावश्यकमित्यत आह, 'ह्रदादेः पक्षत्वेऽपीति ह्रदादेर्यत्र पक्षत्वं तत्रापीत्यर्थः, 'आवश्यकत्वादिति साध्य-हेत्वादिविशिष्टबुद्धिसामान्यं प्रति अवश्यक्लृप्तप्रतिबन्धकत्वादित्यर्थः, 'हेत्वसिद्ध्यादेरित्यादिपदात् धूमवान् वह्नेरित्यादौ व्यभिचार-व्याप्यत्वासिद्ध्यादेः परिग्रहः, 'नापीति, 'साधकप्रमाणं पक्षे साध्यनिश्चयः, प्रागुक्तयुक्तेः, 'समानविषयकेति आत्मविशेष्यकात्मेतरभेदप्रकारकशाब्दबोधानन्तरमित्यर्थः, मननबोधनादिति आत्मपक्षकात्मेतरभेदसाध्यकानुमितिबोधनादित्यर्थः। दूषणान्तरमाह, 'प्रत्यक्षदृष्टेऽपीति प्रत्यक्षतो निश्चितेऽपीत्यर्थः, अनुमानदर्शनात्' अनुमित्सया अनुमितिदर्शनात्, 'तदनुमानाच्चेति सिषाधयिषया तदनुमानाच्चेत्यर्थः। ननु एकलिङ्गावगतस्य लिङ्गान्तरेणानुमितिरसिद्धेत्यत आह, 'मन्तव्यश्चेति आत्मन्यात्मेतरभेदोऽनुमातव्यश्चेत्यर्थः, 'उपपत्तिभिः' बहुभिर्हेतुभिरित्यर्थः, अन्यथा बहुवचनानुपपत्तेरिति भावः। सिषाधयिषितेति सिषाधयिषितः साध्यरूपो धर्मो यस्य पुरुषस्य स सिषाधयिषितसाध्यधर्मा बहुव्रीहौ धर्मस्य धर्मन्निति धर्मशब्दस्य धर्मन्नादेशात् एवम्भूतः 'धर्मी' पुरुषः, 'पक्षः' पक्षतावान् इत्यर्थः, धर्मपदञ्च स्वरूपकथनम्, अनुमितिजनकस्यास्य पक्षपदप्रवृत्तिनिमित्तत्वाभावेन पक्षानिष्ठत्वेऽपि क्षति-

विरहात्, तथाच तत्पक्षकतत्साध्यकतत्पुरुषीयानुमितिगोचरेच्छा तत्पुरुषीय-तत्पक्षक-तत्साध्यकानुमितौ पक्षता तेनान्यसाध्यकानुमितीच्छामादाय सिद्धसाधनस्थले नातिप्रसङ्गः, तत्पुरुषीयत्वेनानुमितिर्विशेषणात् अन्यपुरुषीयतादृशानुमितिविषयैकतत्पुरुषीयेच्छामादाय नातिप्रसङ्गः, सामानाधिकरण्यप्रत्यासत्त्या च कार्य्यकारणभावः। तेन व्यधिकरणतादृशेच्छामादाय नातिप्रसङ्गः।

प्राञ्चस्तु सिषाधयिषितं साध्यं धर्मो यस्य एवम्भूतो धर्मी पक्ष इत्यर्थः, तथाच सिषाधयिषितसाध्यवत्त्वं पक्षत्वमिति फलितम्, अत्र पक्षपदप्रवृत्तिनिमित्तत्वेऽपि अस्य न क्षतिरित्याहुः। तदसत्सपक्षेऽतिव्याप्तेः बाधितसाध्यकेऽव्याप्तेश्च पक्षताया अनुमितिकारणत्वेन अतीतादौ साध्येऽनुमितेरभावापत्तेश्च।

मननस्थले पूर्वोक्ताव्याप्तिं निरस्यति, 'तथा हीति तथाचेत्यर्थः, 'आत्मावगमेऽपि' आत्मन्यात्मेतरभेदनिश्चयेऽपि, 'मननस्य' आत्मन्यनुमितिरूपात्मेतरभेदज्ञानस्य, 'मोक्षोपायत्वेन' 'मोक्षोपायत्वज्ञानेन, एतेन इच्छाकारणं सम्पादितं, 'सिद्धिविशेषेति अनुमितिविशेषणम्, 'आत्मानुमानम्' 'आत्मनि आत्मेतरभेदानुमानम्, 'अत एवेति यत एव सिषाधयिषा पक्षता अत एव वाचस्पतिवचनयोरविरोध इत्यन्वयः, 'बुभुत्सन्ते' जानन्ति, सन्प्रत्ययार्थस्याविवक्षितत्वात् तदर्थस्य विवक्षितत्वे विरोधासम्भवात्। 'तं' करिणम्, 'अविरोध इति, अन्यथा 'प्रत्यक्षकलितमित्यनेन प्रत्यक्षकलितस्यार्थस्यानुमितिरित्युक्तं', 'न हि करिणि दृष्टे इत्यनेन प्रत्यक्षकलितस्यार्थस्य नानुमितिरित्युक्तमिति वचनद्वयस्य विरोधः स्यादिति भावः। अविरोधमुपपादयति, 'अनुमित्सेति, 'तद्विरहः' सिषाधयिषाविरहः,

'तदुपपत्तेरिति वचनयोरुपपत्तेरित्यर्थः, अनुमित्सासत्त्वदशायां 'प्रत्यक्षकलितमित्युक्तम्, अनुमित्साविरहदशायां 'न हि कारणीत्युक्तमिति विशेषादिति भावः। 'सिषाधयिषाया इति सिषाधयिषाया अपि क्वचिदभावादित्यर्थः, यत्रादौ सिषाधयिषा ततो व्याप्तिस्मरणादिः ततो व्याप्तिप्रकारकलिङ्ग-ज्ञानं ततः परामर्शः ततोऽनुमितिस्तत्रेति भावः। ननु सिषा-धयिषायोग्यता पक्षता वाच्या सा च सिषाधयिषानाशेऽप्यस्ती-त्यत आह, 'योग्यताया इति, 'अनिरूपणात्' निरूपयितु-मशक्यत्वात्। ननु तत्रापि परामर्शोत्तरमनुमितीष्टसाधनता-ज्ञानात् पुनरनुमित्सा ततः परमर्शान्तरं ततोऽनुमितिः, अथ वा परामर्शोत्तरं स्मरणात्मकानुमितीष्टसाधनताविषयकपरा-मर्शान्तरं ततोऽनुमित्सा ततोऽनुमितिरिति फलबलात्कल्पनीय-मित्यत आह, 'सिषाधयिषेति' स्वं तृतीयलिङ्गपरामर्शस्तस्य कारणं यो व्याप्तिस्मरणादिस्तदधीनेत्यर्थः, 'अनपेक्षितेति अबुभुक्षितशत्रुसम्पदादेरित्यर्थः, तथाच व्यतिरेकव्यभिचारे-णानुमितौ नास्याः कारणत्वसम्भवः, न च स्वपरसाधारणतत्-पक्षकतत्साध्यकतल्लिङ्गकतत्पुरुषीयानुमितीच्छामात्रं तत्पुरु-षीयतादृशानुमितौ पक्षता वाच्या, तथाच भगवदिच्छामादा-यैवं सर्वत्र सङ्गतिरिति वाच्यम्। तथा सति भगवदिच्छाया नित्यत्वेन सिद्धौ सत्यामपि पक्षताप्रसङ्गात्। ननु सिद्ध्युत्तरा-नुमितित्वमस्याः कार्य्यतावच्छेदकमतो नोक्तस्थले व्यतिरेक-व्यभिचारः तत्र सिद्धिविरहात्, सिद्ध्युत्तरानुमितित्वञ्च स्वस-मानाधिकरणत्वे सति स्वाव्यवहितोत्तरत्वसम्बन्धेन सिद्धिमद-नुमितित्वं, स्वाव्यवहितोत्तरत्वञ्च क्षणद्वयसाधारणं, तच्च स्वाधि-करणसुखवृत्तित्वे सति स्ववृत्तिप्रागभावप्रतियोगित्वम् अधि-करणत्वं वृत्तित्वद्वयञ्च कालिकविशेषणतया बोध्यं तेन सिद्धि-

नाशोत्पत्तिक्षणोत्पन्नानुमितेरपि सङ्ग्रहः, संसारस्यानन्तत्वेन प्रतिक्षणमेवावश्यं कुत्रचित् सुखोत्पादात् सुखस्य क्षणद्वय-मात्रस्थायितया च सिद्धिनाशोत्तरजातानुमितेर्न सङ्ग्रहः, न च तथापि सिषाधयिषाया अननुगततया न कारणत्वसम्भवः, यादृशयादृशेच्छासत्त्वे सिद्धिसत्त्वेऽनुमितिस्तत्तदिच्छाभावकूट-त्वावच्छिन्नाभावत्वेन कारणत्वात्। न चैवं सिषाधयिषासत्त्वे सिद्ध्यसत्त्वेऽपि सिद्ध्युत्तरानुमित्यापत्तिः तत्सामग्रीसत्त्वादिति वाच्यम्। सिद्ध्युत्तरानुमितिं प्रति सिद्धेरपि हेतुत्वात्। वस्तु-तस्तु सिद्ध्युत्तरानुमितित्वं न कार्य्यतावच्छेदकम् अपि तु तत्त-दिच्छाभावकूटत्वावच्छिन्नाभावोत्तरानुमितित्वमेव कार्य्यताव-च्छेदकं, तदवच्छिन्नञ्च तत्र जायत एव इति नापत्तिः। न च तथापि यत्र सिषाधयिषा नास्ति सिद्धिश्च वर्त्तते तत्र सिषा-धयिषाभावकूटत्वावच्छिन्नाभावोत्तरानुमितेरनुत्पादेऽपि अनु-मितिसामान्यापत्तिर्दुर्वारा सामान्यसामग्रीसत्त्वात् तदनु-त्तरानुमितौ सामग्र्यन्तराकल्पनादिति वाच्यम्। तदनुत्तरानु-मितावपि सिद्ध्यभावस्य हेतुत्वकल्पनादिति। मैवम्। गुरु-तरकार्य्यकारणभावद्वयप्रसङ्गात् सुखदुःखेच्छाद्वेषप्रवृत्तिनिवृत्ति-शब्दानां सप्तानामेव क्षणद्वयमात्रावस्थायितया विनिगमना-विरहेण सप्तानामेवोत्तरत्वानुत्तरत्वघटकत्वेन चतुर्दशकार्य्य-कारणभावप्रसङ्गाच्च। न च स्वध्वंसाधिकरणसमयध्वंसानधि-करणत्वे सति स्वाधिकरणसमयध्वंसाधिकरणत्वमेवाव्यवहितो-त्तरत्वं वक्तव्यं न तु सुखादिघटितमिति वाच्यम्। तथापि प्रत्येकं सुखादिघटिताव्यवहितोत्तरत्वमादाय विनिगमका-भावेन पञ्चदशकार्य्यकारणभावापत्तेर्दुर्वारत्वात् शरीरगौरव-स्याधिकत्वादिति निगर्वः।

इति श्रीमथुरानाथतर्कवागीशकृते अनुमानाख्यद्वितीयखण्डरहस्ये पक्षतापूर्वपक्षरहस्यम्।

अथ मथुरानाथतर्कवागीशकृतपक्षतासिद्धान्तरहस्यम्।

'सिषाधयिषेति, 'सिषाधयिषाविरहसहकृतं' तद्विरह-विशिष्टं, यत् 'साधकमानं' साध्यनिश्चयः, तदभावो यस्मिन् पुरुषेऽस्ति स पुरुषः 'पक्षः' पक्षपदपरिभाषाविषयतावच्छेद-कानुमितिजनकधर्मवान् इत्यर्थः, तथाच विशेषणताविशेष-सम्बन्धेन समवायसम्बन्धावच्छिन्नप्रतियोगिताकनिरुक्तसाध्य-निश्चयाभाववत्त्वम् अनुमितिजनकं पक्षत्वमिति फलितम्, अनुमितिजनकस्यास्य पक्षपदप्रवृत्तिनिमित्तत्वाभावेन आत्म-निष्ठत्वेऽपि क्षतिविरहात्, पक्षपदप्रवृत्तिनिमित्तत्वमतेऽपि स्वरूपसम्बन्धेन तत्प्रवृत्तिनिमित्तत्वाभावात् स्वरूपसम्बन्धेन आत्मनिष्ठत्वेऽपि क्षतिविरहाच्च तच्चाग्रे स्फुटीभविष्यति। आत्मनिष्ठत्वाभिधानञ्च विशेषणता-समवायोभयघटितसामाना-धिकरण्यप्रत्यासत्त्या हेतुत्वबोधनाय, साधकमानपदन्तु यथा-श्रुतं न सङ्गच्छते तथा सति साधकमानस्य सिद्धिजनकप्रमाण-स्यावश्यमनुमितेः पूर्वं सत्त्वात् इच्छां विना क्वाप्यनुमितिर्न स्यात्। न चानुमित्यतिरिक्तसिद्धिजनकाभावो वाच्यः, अनु-मित्यनन्तरमपि पक्षतापातात्। न च साधकमानञ्चेह यदि साध्यनिश्चयस्तदा संशयोत्तरं व्याप्यदर्शनात् साध्यप्रत्यक्षस्थले-ऽपि पक्षतापत्तिः साध्यनिश्चयाभावादिति वाच्यम्। इष्टत्वात्, समानविषये लौकिकप्रत्यक्षसामग्र्याः पृथक् प्रतिबन्धकतया अनुमित्यनुत्पादात्। न चैव संशयोत्तरं विना प्रत्यक्षेच्छां व्याप्यदर्शनादलौकिकप्रत्यक्षं क्वापि न स्यात् अलौ-किकप्रत्यक्षं प्रति अनुमितिसामग्र्याः प्रतिबन्धकत्वादिति वाच्यम्। इष्टत्वात्। वस्तुतस्तु संशयोत्तरं व्याप्यदर्शनोत्प-त्तिद्वितीयक्षण इव तदुत्पत्तिक्षणेऽपि स्थाणुत्वादिप्रत्यक्षनिश्च-

योत्पत्तौ बाधकाभावेन सर्वत्र साध्यनिश्चयसत्त्वान्न पक्षतायाः सम्भवः विशेषदर्शनस्य संशयोत्तरप्रत्यक्षनिश्चयहेतुताया बहुधा निराकृतत्वात् इत्येव तत्त्वम्। वैशिष्ट्यञ्च एककालावच्छेदेन एकात्मवृत्तित्वं, विशिष्टाभावस्याव्यवहितपूर्वसत्तायाः अपेक्षितत्वेन कालान्तरीयसिषाधयिषाविरहमादाय सिषाधयिषासत्त्वेऽपि सिद्धिसत्त्वे नानुमित्यनुदयप्रसङ्गः। अयञ्च विशिष्टाभावो मननस्थले सिषाधयिषाविरहरूपविशेषणाभावात् घनगर्जितेन मेघानुमानादौ साध्यनिश्चयरूपविशेष्याभावादेवेति नाव्याप्तिः। यत्रानुमित्यानन्तरं साध्यनिर्णयात्मकः परामर्शस्ततोऽनुमितिः तत्र पक्षतासम्पत्तये विशिष्टान्तं साधकमानविशेषणं, घनगर्जितादौ पक्षतासम्पत्तये विशेष्यदलम्। सिषाधयिषा च तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारिकानुमितिविषयिणीच्छा ग्राह्या यत्किञ्चिल्लिङ्गकज्ञानं जायतामितीच्छायामपि सिद्धिसत्त्वेऽनुमित्यनुत्पादात् अनुमितित्वाप्रकारिकायामपि प्रत्यक्षाद्यतिरिक्तं पर्वते वह्निज्ञानं जायतामितीच्छायां सिद्धिसत्त्वेऽनुमित्युत्पादाच्च। एवं यादृशयादृशेच्छासत्त्वे सिद्धौ सत्यामनुमितिस्तत्तदिच्छाभावसमुदाय एवावच्छेदकः। साध्यनिश्चयश्चानुमितिसमानाकारो ग्राह्यः तेन पाषाणमयत्वादिना पर्वते तेजस्त्वादिना च वह्नेः सिद्धावपि पर्वतत्वेन पर्वते वह्नित्वादिना वह्न्याद्यनुमितिरिति भावः। अत्र च सिषाधयिषाविरहकूटादीनां परस्परं विशेषण-विशेष्यभावे विनिगमकाभावादनन्तकार्य्य-कारणभावापत्तिः तद्विपरीतज्ञानादेः प्रतिबन्धकताविचारावसरे अस्मत्कृतसिद्धान्तरहस्योक्तदिशा निराकरणीया। ननु अस्य विशिष्टाभावस्यानुमितिजनकत्वे किं मानमित्यतोऽन्वय-व्यतिरेकौ तत्र प्रमाणयति; 'तेनेति अस्यानुमितिजनकत्वेनेत्यर्थः, 'स न पक्षः' स न

पक्षपदपरिभाषाविषयतावच्छेदकानुमितिजनकधर्मवानित्यर्थः। व्यतिरेकं दर्शयित्वा अन्वयं दर्शयति, 'यत्रेति' 'साधकप्रमाणे' साध्यनिश्चये, 'उभयाभावः' सिषाधयिषा-साध्यनिश्चययोरभावः, 'तत्रेति, प्रथमे केवलविशेषणाभावकृतो द्वितीये विशेषण-विशेष्योभयाभावकृतस्तृतीये च केवलविशेष्याभावकृतो विशिष्टाभाव इति भावः। 'पक्षत्वम्' अनुमितिमत्त्वं, 'पक्षत्वस्य' पक्षपदवाच्यत्वस्य, 'भेदकत्वं' पक्षपदवाच्येतरभेदसाधकत्वं, तदितराप्रसिद्धेरिति भावः। 'पक्षपदप्रवृत्तिरिति पक्षपदप्रवृत्तेरनुमित्युत्पत्तेर्निमित्तं कारणमित्यर्थः। यद्वा पक्षपदस्य प्रवृत्तिः शक्तिर्येन रूपेण इति व्युत्पत्त्या 'पक्षपदप्रवृत्तिः' पक्षपदशक्यतावच्छेदिकानुमितिः, उद्देश्यतासम्बन्धेनानुमितिमत्त्वमेव पक्षपदशक्यतावच्छेदकं, तत्र निमित्तं कारणमित्यर्थः, तथाच नेदमितरभेदसाधकम् अपि तु अनुमितिकारणमिति भावः। अथ वा पक्षपदप्रवृत्तिनिमित्तं शास्त्रकारीयपक्षपदपरिभाषाविषयतावच्छेदको धर्म इत्यर्थः।

प्राञ्चस्तु 'पक्षपदप्रवृत्तिनिमित्तं' पक्षपदशक्यतावच्छेदकमित्यर्थः, पक्षपदस्य नानार्थतया साध्य-पक्षभेदेन सिषाधयिषासाध्यनिश्चययोर्भेदादपि न क्षतिः। न चैवं पर्वतो वह्निमानित्यनुमितौ घटादेरपि पक्षव्यवहारप्रसङ्ग इति वाच्यम्। निश्चयनिष्ठविशेष्यतासम्बन्धेन प्रतियोगितावच्छेदकत्वस्य शक्यतावच्छेदकतानियामकसम्बन्धत्वे नातिप्रसङ्गविरहादित्याहुः।

अत्र प्राभाकराः प्रत्यक्षादिवदनुमितावपि पक्षता न हेतुः गौरवान्मानाभावाच्च विषयान्तरसञ्चारादिविरहे परामर्शादिसत्त्वे च धारावाहिकप्रत्यक्षवदनुमितिधाराप्युत्पद्यत एव किन्तु परार्थानुमान एव सिद्धसाधनसमर्थान्तरविधया दूषणम्। न चैवं लिङ्गोपहितलैङ्गिकभानव्येऽनुमित्यनुव्यवसायानुपपत्तिः

अनुमितिसामग्र्या बलवत्त्वेन अनुमितिधाराया एव उत्पत्स्यमानत्वात् इति वाच्यम्। लिङ्गोपहितलैङ्गिकभानस्य मानाभावेन सुदूरपराहतत्वात्। अथ तथापि सिद्धेरप्रतिबन्धकत्वेऽविनश्यदवस्थतत्तत्परामर्शादुत्पन्नानुमितिव्यक्तयः पुनः कथं नोत्पद्यन्ते। न च तत्तदनुमितिव्यक्तिं प्रति तत्तत्प्रागभावव्यक्तीनां विशिष्य हेतुतया तत्तदनुमितिव्यक्तीनां विशिष्य प्रतिबन्धकतया वा उत्पन्नानां न तासां पुनरुत्पाद इति वाच्यम्। अनन्तकार्य्यकारणभावकल्पनामपेक्ष्य लाघवात् सिद्धेः प्रतिबन्धकत्वस्यैव युक्तत्वात्। न च सिद्धेः प्रतिबन्धकत्वेऽपि सिषाधयिषाविरहवैशिष्ट्यस्य तत्र विशेषणत्वावश्यकतया यत्र सिषाधयिषा तत्रोऽनुमित्यात्मकसिद्ध्यात्मकः परामर्शस्तत्र तदनुमितिव्यक्तेः पुनरुत्पादप्रसङ्गो दुर्वार इति वाच्यम्। सिषाधयिषा-परामर्शोभयकालीनानुमितिव्यक्तिषु तत्तत्प्रागभावव्यक्तीनां विशिष्य हेतुत्वस्य तत्तदनुमितिव्यक्तीनां विशिष्य प्रतिबन्धकत्वस्य वास्माभिरभ्युपगमात्। न चैवं सिद्धेः प्रतिबन्धकत्वे किं लाघवमिति वाच्यम्। सिषाधयिषाविरहकालीनाविनश्यदवस्थपरामर्शजन्यानुमितिव्यक्तिषु तत्प्रागभावव्यक्तीनां कारणत्वाद्यकल्पनादेव महालाघवादिति चेत्। न। सिद्धेः प्रतिबन्धकत्वाभ्युपगमेऽपि स्व-स्वानधिकरणेषु आत्मसु तत्तदनुमितिव्यक्तीनाम् उत्पादवारणाय पूर्व-पूर्वानुमितिव्यक्त्युत्पत्तिसमकालं भाव्यनुमितिव्यक्तीनाम् उत्तरोत्तरानुमितिव्यक्त्युत्पत्तिसमकालञ्च अतीतानुमितिव्यक्तीनाम् उत्पादवारणाय च तत्तदनुमितिव्यक्तिषु पूर्व-पूर्वोत्पन्नतत्तत्परामर्शव्यक्तीनां विशिष्य हेतुत्वावश्यकतया तस्या एव उत्पत्तिसम्बन्धेन कारणत्वाभ्युपगमादेव उत्पन्नपुनरुत्पादवारणसम्भवात्। अथ तथापि यद्विषयकविशेषदर्शकयद्विषयविशेषसा-

ष्यिका एकैकानुमितिरेव एकैकपुरुषस्य जाता न तु तत्पूर्वं तत्परतो वा तत्पक्षक-तत्साध्यकः परामर्शः अविनश्यदवस्थ-परामर्शजन्यतत्पक्षक-तत्साध्यकानुमितिव्यक्तीनाम् उत्पन्न-पुनरुत्पादवारणाय लाघवात् तत्पक्षक-तत्साध्यकानुमितिं प्रति तादृशसिद्धेः प्रतिबन्धकत्वमेव कल्पयितुं युक्तं तत्रापि तत्तदनुमितिव्यक्तिं प्रति उत्पत्तिसम्बन्धेन तत्तत्परामर्शादि-व्यक्तेर्विशिष्य हेतुत्वकल्पनेऽनन्तकार्य्य-कारणभावप्रसङ्गादिति। न च स्व-स्वानधिकरणेषु आत्मसु तत्तदनुमितिव्यक्तीनाम् उत्-पादवारणाय तत्रापि तत्तत्परामर्शव्यक्तीनां विशिष्य हेतुत्व-मावश्यकमिति वाच्यम्। क्रिया-संयोगकार्य्य-कारणभावोक्त-युक्त्या समवायिकारणव्यक्तीनां स्वस्वसमवेतसामान्यं प्रति तत्तद्व्यक्तित्वेन हेतुत्वावश्यकत्वादेव स्व-स्वानधिकरणेषु आत्मसु तत्तद्व्यक्तीनाम् उत्पादासम्भवादिति चेत्। न। तादृशविषय-विशेषे मानाभावात् अन्यथा यद्विषयविशेषविशेष्यक-यद्विषय-विशेषप्रकारिका एकैकप्रत्यक्षव्यक्तिरेव एकैकपुरुषस्य जाता न तु तत्पूर्वं तत्परतो वा तद्विषयविशेषयोः सन्निकर्षादिः तद्विषयविशेष्यक-तद्विषयप्रकारकप्रत्यक्षव्यक्तीनाम् उत्पन्नपु-नरुत्पादवारणाय तत्तद्विशेष्यक-तत्तत्प्रकारकप्रत्यक्षं प्रत्य-पि तत्तद्विशेष्यक-तत्तत्प्रकारकसिद्धेः सामान्यतः प्रतिबन्ध-कत्वप्रसङ्गात् तत्रेष्टापत्तौ अत्रापि इष्टापत्तेः सम्भवात्, तादृश-विषयविशेषानुमितौ पक्षतायाः हेतुत्वसिद्धावप्यन्यत्र तस्या-स्तदसिद्धेश्च। वस्तुतस्तु प्रत्यक्षादीनामप्युत्पन्नपुनरुत्पाद-वारणाय सामान्यतस्तादात्म्यसम्बन्धेन कार्य्यत्वावच्छिन्नोत्पत्तिं प्रति सत्तावच्छिन्नोत्पत्तिं प्रत्येव वा विशेषणताविशेषसम्बन्धेन कार्य्यसहवर्त्तितया समयसम्बन्धनाशत्वेन नाशत्वेनैव वा प्रति-बन्धकत्वं क्लृप्तं ज्ञानादिनाशस्य विषयवृत्तित्वे मानाभावात्

अधिकरणस्याविद्यमानतादशायामपि तत्र विशेषणताविशेष-सम्बन्धेन तदभावो वर्त्तत एवेति न तद्दोषतादवस्थ्यं तथाच ततएव उत्पन्नानुमितेरपि पुनरुत्पादासम्भवः। एतेन तत्-परामर्शादिव्यक्तेरनन्तकार्य्य-कारणभावेषु उत्पत्तेः 'सम्बन्धत्व-कल्पनामपेक्ष्य सिद्धेरतिरिक्तैकप्रतिबन्धकत्वकल्पनैव लघीयसी-त्यग्रिमोक्तं प्रत्युक्तमित्याहुः। तदसत्। सिद्धेरप्रतिबन्धकत्वे परा-मर्श ि ष्ठाप्रामाण्यग्रहाभावस्य पृथगनुमितिहेतुत्वमते सिद्ध्या-त्मकपर.म र्शनिष्ठतत्तज्ज्ञानत्वधर्मितावच्छेदककाप्रामाण्यग्रहा-भावानामपि पृथक् हेतुत्वावश्यकत्वेन महागौरवापत्तेः। अन्यथा इदं ज्ञानं व्याप्यत्वाद्यंशेऽप्रमेत्यप्रामाण्यग्रहात्मक-सिद्ध्यात्मकपरामर्शादनुमित्यापत्तेः। न च तथापि यत्साध्य-सिद्धिकालीनपरामर्शेषु न तत्तज्ज्ञानत्वधर्मितावच्छेदककाप्रा-माण्यज्ञानं तत्र सिद्धेः प्रतिवन्धकत्वे मानाभाव इति वाच्यम्। तत्रापि सिद्धेरप्रतिबन्धकत्वे विनाप्यनुमित्सां स्मरणादिरूप-सिद्ध्यात्मकपरामर्शानन्तरमनुमित्यापत्तेः। न चेष्टापत्तिः, अनु-व्यवसायविरहात् अनुव्यसायस्यापि स्वीकारे अनुभवापलापात् अन्यथा शाब्दबोधादिकं प्रति आकाङ्क्षादिज्ञानस्य अनुमितिं प्रति परामर्शादेश्च गौरवादकारणत्वप्रसङ्गात् निराकाङ्क्षादि-स्थलेऽपि शाब्दबोधादौ तदनुव्यवसाये च इष्टापत्तेः सुवचत्वात् विशिष्टज्ञानं प्रत्यपि बाधादेः प्रतिबन्धकत्वविलोपप्रसङ्गाच्च। न च वह्निव्याप्यधूमवान् वह्निव्याप्यधूमव्याप्यवान् वह्निव्याप्य-धूमव्याप्यव्याप्यवान् इति समूहालम्बनपरामर्शानन्तरं परा-मर्शानुमितिप्रवाहस्य प्राभाकरनये अनुभवसाक्षिकत्वात् भव-न्मतेऽपि कुत्रचिदनुभवापलापस्तुल्य एव गौरवं पुनरतिरिच्यते इति वाच्यम्। तत्र स्थलविशेषेऽनुमितिधारायाः प्रामाणिकत्वे सिषाधयिषावत् तत्तत्परामर्शव्यक्तीनाम् उत्तेजकमध्ये प्रवेशे

क्षतिविरहात्। किञ्च सिद्ध्यात्मकपरामर्शस्थलेऽविनश्यदवस्थ-परामर्शजन्यानुमितिस्थले चाप्रामाणिकानन्तानुमिति-तत्प्राग-भाव-तद्ध्वंसानां कार्य्य-कारणभावकल्पनामपेक्ष्य लाघवात् पक्षताया एव हेतुत्वं कल्प्यते, प्रत्यक्षादिस्थले च धारावाहिक-साक्षात्कारादीनां प्रमाणसिद्धत्वात् गौरवमप्याश्रीयते। न च विषयान्तरसञ्चारादिविरहे भवन्मतेऽपि अनुमित्यनन्तरमनु-मितिसमानाकारमानसोपनीतभानोत्पत्तौ बाधकाभावा-न्नातिरिक्तव्यक्तिकल्पना ममापि अनुमितेस्तत्स्थलाभिषिक्तत्वा-द्विषयान्तरसञ्चारादिसत्त्वे च तत एव ममाप्यनुमित्यनुत्-पत्तेरिति वाच्यम्। अनुमित्युत्तरमनुमितिर्निर्विकल्पकव्यक्ते-स्तदनुव्यवसायव्यक्तेरिव वोपनीतभानात्मिकाया उत्पत्तेरति-रिक्तकल्पनाभावात् निर्विकल्पकादिव्यक्तेर्भवतापि स्वीकारादि-त्यास्तां विस्तरः।

इति श्रीमथुरानाथतर्कवागीश-विरचिते अनुमानाख्यद्वितीयखण्डरहस्ये पक्षतासिद्धान्तरहस्यं, समाप्तमिदं पक्षतारहस्यम्।

---

## पक्षता जागदीशीवादार्थः।

यद्धर्मिकयत्सम्बन्धावच्छिन्नयत्प्रकारकनिश्चयत्वेन यत्सं-शयं प्रति निवर्त्तकत्वं स संशयस्तत्पक्षकतत्साध्यकतत्संस-र्गकानुमितौ हेतुभूता पक्षतेत्यर्थ इति। अस्य यद्धर्मावच्छि-न्नसांसर्गिकविषयतानिरूपितयद्धर्मावच्छिन्नप्रकारतानिरूपित-त्वावच्छिन्नयद्धर्मावच्छिन्नविशेष्यतानिष्ठावच्छेदकताका यत्-संशयनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकता स संशयस्तद्धर्मा-वच्छिन्नसांसर्गिकविषयतानिरूपिततद्धर्मपर्य्याप्त्यवच्छेदकताक-विधेयतानिरूपिततद्धर्मपर्य्याप्त्यवच्छेदकताकविशेष्यताकानुमि-तौ कारणीभूता पक्षतेत्यर्थः।

अथ प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपित-प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारतानिष्ठावच्छेदकताकप्रतिबन्धकतानिवेशेनैव वह्निघटवान् न वेति संशयवारणसम्भवे किमुक्तम्। निश्चयत्वावच्छिन्नत्वस्य प्रतिबन्धकताविशेषणत्वेन न च पर्वतो वह्निमान् इत्यनुमितौ भूतलं वह्निमत् न वेति संशयस्य पक्षतात्वापत्तिः। तं प्रति वह्नित्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितभूतलत्वावच्छिन्नविशेष्यताकज्ञानत्वेनैव प्रतिबन्धकतया पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारतानिष्ठावच्छेदकताकप्रतिबन्धकत्वादिति वाच्यम्। साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यतानिष्ठावच्छेदकताकत्वस्य प्रतिबन्धकतायां विवक्षितत्वात्।

न च पर्वतो वह्निमान् इत्यनुमितौ महानसीयवह्निमान् न वेति संशयस्य पक्षतात्वापत्तिः, तस्यापि निरुक्तप्रतिबन्धकताकत्वादिति वाच्यम्। साध्यतावच्छेदकतापर्य्याप्त्यवच्छेदकताकप्रकारकत्वस्य उक्तत्वात्। न च तथापि पर्वतो वह्निमान् इत्यनुमितौ पर्वतो वह्निघटोभयवान् न वेति संशयेऽतिव्याप्तिः, तत्प्रतिबन्धकतावच्छेदकताया वह्निघटवान् पर्वत इत्येकत्र द्वयमितिरीत्या ज्ञानीयविशेष्यतासाधारणत्वादिति वाच्यम्। तादृशप्रकारत्वान्यप्रकारत्वानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यतायां प्रतिबन्धकतावच्छेदकत्वनिवेशेनैव तद्दोषवारणसम्भवे तादृशानिरूपितत्वे प्रतिबन्धकतावच्छेदकतावच्छेदकत्वनिवेशस्य व्यर्थत्वात्।

न च स्वफलेच्छादिविशिष्टशब्दे सामग्र्याः समानविषयकानुमितिं प्रति विरोधित्वं सर्वसम्मतम्। तादृशसामग्री च तात्पर्य्यादिज्ञानविशिष्टयोग्यतादिज्ञानरूपायोग्यताज्ञानञ्च

संशयसाधारणम्। तथाच पर्वतो वह्निमान् इत्यनुमितेरपि तादृशानुमितौ पक्षतात्वापत्तिः। तत्प्रतिबन्धकतावच्छेदकत्वस्य वह्नित्वपर्य्याप्तावच्छेदकताकप्रकारत्वान्यप्रकारत्वानिरूपितपर्वतत्वावच्छिन्नविशेष्यतायामपि सत्त्वात्, अतो निरुक्तानिरूपितत्वे प्रतिबन्धकतावच्छेदकतावच्छेदकत्वनिवेशनमावश्यकमिति वाच्यम्। संयोगेन वह्निमान् समवायेन वह्न्यभाववान् इति ज्ञानकालीनस्य संयोगेन वह्निमान् पर्वत इति ज्ञानस्य समवायेन वह्निमान् इति ज्ञानं प्रति विरोधितया तादृशज्ञानस्य संयोगेन वह्न्यनुमितौ पक्षतात्ववारणाय प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशस्य आवश्यकतया तत एव उक्तातिव्याप्तिवारणसम्भवे तादृशानिरूपितत्वे प्रतिबन्धकतावच्छेदकतावच्छेदकत्वनिवेशस्य व्यर्थतापातात्।

न च प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्ननिवेशेऽपि प्रतियोगितासम्बन्धेन वह्निविशिष्टपक्षकसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावानुमितौ अभावत्वावच्छेदेन संयोगेन वह्निसंशयस्य पक्षतात्वापत्तिः सुघटैव, अभावत्वावच्छेदेन संयोगेन वह्निप्रकारकबुद्धौ प्रतियोगितासम्बन्धेन वह्न्यवच्छेदेन संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावप्रकारकनिश्चयकालीनाभावत्वावच्छिन्नधर्मिकप्रतियोगितासम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताकनिश्चयत्वेन न प्रतिबन्धकत्वं गौरवात्, अपि तु प्रतियोगितासम्बन्धेन वह्न्यवच्छेदेन संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावप्रकारकनिश्चयत्वेनेति, तादृशसंशयप्रतिबन्धकताया ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य आवश्यकत्वात्, तदर्थं प्रकारान्तरानुसरणे तेनैव व्यावर्त्तकान्तरनिश्चयप्रतिबन्धकतावारणात्, ज्ञानवैशिष्ट्यानवच्छिन्नत्वविशेषणस्य अनावश्यकतया योग्यताज्ञानघटितसामग्रीप्रतिबन्धकतावारकतयैव

तादृशानिरूपितत्वे प्रतिबन्धकतावच्छेदकतावच्छेदकत्वनिवेशस्य सार्थक्यं सम्भवतीति वाच्यम्। निरुक्तस्थले अभावो वह्निमान् न वेति संशयनिष्ठप्रतिबध्यतायाः वक्ष्यमाणसाध्यविषयत्वघटितधर्मावच्छेद्यत्वाभावेनैव तादृशसंशयवारणसम्भवे प्रकारान्तरानुसरणानावश्यकत्वात्।

न च उक्तस्थले अभावो वह्निमान् न वेति संशयनिष्ठप्रतिबध्यतायास्तादृशविशेषणाक्रान्ततया तादृशसंशयवारणाय प्रकारान्तरानुसरणमावश्यकमिति वाच्यम्। अगत्या तत्तत्प्रतिबन्धकताभेदनिवेशेऽपि व्यावर्त्तकान्तरप्रतिबध्यतामादाय अतिप्रसङ्गवारणाय ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशस्य आवश्यकत्वात्। न च पर्वतो वह्निमान् इत्यनुमितौ पर्वतो वह्निमत्पर्वतवान् न वेति संशयस्य पक्षताव्ववारणाय साध्यतावच्छेदकावच्छिन्नप्रकारतान्यप्रकारत्वानिरूपितत्वे प्रतिबन्धकतावच्छेदकत्वनिवेशनमावश्यकमिति वाच्यम्। पक्षतावच्छेदकावच्छिन्नत्वनिवेशस्य आवश्यकतायां मुख्यविशेष्यत्वनिवेशेनैव तद्वारणादिति चेन्न। प्रकारतायां साध्यतावच्छेदकपर्य्याप्त्यवच्छेदकताकत्वनिवेशनं विशेष्यतां मुख्यत्वनिवेशनञ्च अपेक्ष्य लाघवादेव साध्यतावच्छेदकावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितत्वे प्रतिबन्धकतावच्छेदकतावच्छेदकत्वस्य विवक्षितत्वात्। पर्वतो वह्निमान् इत्यनुमितौ महानसीयवह्निमान् न वेति संशयस्य तत एव वारणसम्भवादिति भावः।

पक्षे साध्यवत्त्वनिश्चयनिवर्त्त्यत्वे सति तादृशनिश्चयप्रतिबन्धकतावच्छेदकविषयिताशून्यज्ञानत्वं संशयत्वमिति जगदीशः। अथ पक्षतावच्छेदकावच्छिन्नविषयतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारतानिदानज्ञानत्वावच्छिन्नप्रति-

बध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयिताशून्यत्वनिवेशेनैव सामञ्जस्ये कृतं निश्चयत्वनिवेशेनेति। न च पर्वतो वह्निमान् इत्यनुमितौ पर्वतो वह्निमान् न वा वह्निघटोभयाभाववांश्च इति संशयेऽव्याप्तिः, तत्प्रतिबध्यत्वस्य पर्वतो वह्निघटोभयवान् इत्यत्रैव एकत्र द्वयमितिरीत्या पर्वतो वह्निघटवान् इत्यत्रापि अस्ति प्रतिबध्यत्वञ्च, वह्नित्वावच्छिन्नविषयतानिरूपितपर्वतत्वावच्छिन्नविषयतानिरूपितघटत्वावच्छिन्नविषयताशालिबुद्धित्वेन, तथाच तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वस्य तादृशसत्त्वादिति वाच्यम्। वह्नित्वावच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयिताशून्यत्वस्य निवेशादिति चेत्, एतादृशार्थलाभायैव निश्चयपदमिति ध्येयम्।

वस्तुतस्तु स्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयिताशून्यत्वे तदुभयसम्बन्धेन तादृशनिश्चयत्ववज्ज्ञानत्वम्, इत्यनुगमलाभायैव निश्चयपदमिति चिन्त्यम्। तादृशनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वे सति तादृशनिश्चयत्वव्यापकप्रतिबन्धकतानवच्छेदिका या विषयता तद्वत्त्वम् इति तु समुदितस्य निष्कृष्टार्थः।

तथापि प्रकृतपक्षविषयताबहिर्भूतसाध्यविषयिताघटित धर्मावच्छिन्नं यत् प्रतिबध्यत्वं तन्निवेशितमित्यदोष इति जगदीशः। अथ पक्षविषयताबहिर्भूतत्वं पक्षतावच्छेदकावच्छिन्नविषयत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वं चेन्न। पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वस्य तथाच वह्निप-

पक्ष वह्निसाध्यकस्थले वह्निर्वह्निमान् नवेति संशयादावव्याप्तिः। तत्र साध्यविषयतायां पक्षविषयताबहिर्भूतत्वविरहात्।

न च पक्षविषयताबहिर्भूतत्वं पक्षतावच्छेदकावच्छिन्न-विशेष्यतासमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्, तथाच वह्नि र्वह्निमान् नवेति संशयीयप्रतियोगित्वसम्बन्धावच्छिन्न-वह्नित्वावच्छिन्नप्रकारतायामेव पक्षतावच्छेदकीभूतवह्नित्वा-वच्छिन्नविशेष्यताधिकरणवह्नि र्घटवानिति निश्चयवृत्तिभेद-प्रतियोगितावच्छेदकत्वात् न तादृशसंशयादावव्याप्तिरिति वाच्यम्। ज्ञानभेदेन विषयताभेदेन चालनीन्यायेन विषय-तामात्रस्यैव पक्षतावच्छेदकावच्छिन्नविशेष्यतासमानाधिकरण-भेदप्रतियोगितावच्छेदकत्वेन वह्निव्याप्यवत्सधर्मा पर्वतपक्ष-कवह्निव्याप्यसाध्यकस्थले तादृशधर्मावच्छिन्नविशेष्यकवह्नि-मत्त्वसंशयस्य वारणायोगात्।

ननु पक्षविषयताबहिर्भूतत्वं पक्षतावच्छेदकावच्छिन्नविशेष्यता-सामान्यविषयकं यज्ज्ञानं तद्व्यक्तिवृत्तिभेदप्रतियोगितावच्छे-दकविषयतात्वम्। एवञ्च न क्वापि अव्याप्त्यतिव्याप्ती। न च तथापि पक्षतावच्छेदकावच्छिन्नविशेष्यतासामान्यविषयकज्ञाने वह्निव्याप्यत्वावच्छिन्नविषयत्वावच्छिन्नपक्षतावच्छेदकावच्छि-न्नविशेष्यताघटकवह्निव्याप्यत्वावच्छिन्नविषयतानिष्ठविषयत्वाव-च्छिन्नप्रतियोगिताकभेदासत्त्वेऽपि पक्षतावच्छेदकावच्छिन्नविशे-ष्यताघटकवह्निव्याप्यत्वावच्छिन्नविषयतानिष्ठप्रमेयत्वप्रकारता-निरूपितविषयत्वावच्छिन्नप्रतियोगिताकभेदसत्त्वात् तादृशब-हिर्भूतत्वं तत्रापि अस्तीति वाच्यम्। तत्तद्व्यक्तिवृत्तिभेदप्रतियो-गितावच्छेदकत्वव्याप्यस्वनिष्ठविषयतात्वकत्वस्य पक्षविषयताब-हिर्भूतत्वपदेन वाच्यत्वात् इति चेन्न। सर्वत्र इतरांविषयकता-दृशविशेष्यतासामान्यविषयकज्ञाने मानाभावादिति चेन्न पक्ष-

तावच्छेदकावच्छिन्नमुख्यविशेष्यतावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकत्वस्य पक्षविषयताबहिर्भूतत्वपदेन वाच्यत्वात्।

न च तथापि वह्निव्याप्ये वह्निव्याप्यस्य साध्यतास्थले वह्न्यभावो वह्निव्याप्ये न वेति संशयेऽतिव्याप्तिः, तस्यापि पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यत्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितानवच्छेदकीभूतवह्निव्याप्यत्वावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबध्यतावत्त्वादिति वाच्यम्। प्रतिबध्यतावच्छेदकीभूतसाध्यतावच्छेदकावच्छिन्नविषयत्वस्य पक्षतावच्छेदकावच्छिन्नविशेष्यत्वानिरूपितप्रकारत्वान्यत्वेन विशेषणीयत्वात्। न चात्र विषयतात्वमपहाय प्रकारतात्वेन निवेशनमफलमिति वाच्यम्। पर्वते वह्नेः साध्यतास्थले साध्यविशेष्यकसंशयमात्रस्यैवासङ्ग्रहप्रसङ्गात्। न च तथापि वह्निव्याप्ये वह्निव्याप्यसाध्यतास्थले वह्निव्याप्यवह्न्यभाववान् वह्निव्याप्य इत्याकारकवह्न्यभावांशे विशेषणताविशेषावच्छिन्नाधेयतासम्बन्धावच्छिन्नवह्निव्याप्यत्वावच्छिन्नप्रकारताकज्ञानेऽतिव्याप्तिः, तस्यापि निरुक्तपक्षविषयताबहिर्भूतसाध्यतावच्छेदकावच्छिन्नविषयत्वावच्छिन्नत्वस्य स्वातन्त्र्येण प्रतिबध्यकतायां निवेशादिति बहुतरप्रयासाल्लाघवाद् आह वस्तुतस्त्विति।

ननु अत्र कल्पेऽपि वह्निव्याप्यो वह्निव्याप्यवान् इत्यादौ वह्निव्याप्यो वह्निमान् न वेति संशयेऽतिव्याप्तिः। न च साध्यविशेष्यतायामपि पक्षतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वं निवेश्यम्, अतो नोक्तदोष इति वाच्यम्। वह्निव्याप्यकालीनवह्निव्याप्यो वह्निमान् न वेति संशयस्य पक्षतापत्तेः। तत्र साध्यविधेयतायां पक्षप्रकारतानिरूपितत्वसत्त्वादिति चेत्, अत्र केचित् पक्षतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वमेव साध्य-

विशेष्यतायां निवेश्यम्। तच्च साक्षात्परम्परासाधारणम्। अवच्छिन्नत्वञ्च अनतिरिक्तवृत्तित्वम्। तथाच पक्षतावच्छेदकावच्छिन्नप्रकारतानिरूपितसाध्यतावच्छेदकावच्छिन्नविशेष्यतानतिरिक्तवृत्तित्वसाध्याभावत्वावच्छिन्नप्रकारत्वावच्छिन्नत्वान्यतरवत् साध्यनिश्चयप्रतिबध्यत्वं फलितमिति नोक्तदोष इत्याहुः। नवीनास्तु साध्यविशेष्यतायां प्रतिबध्यतावच्छेदकीभूतपक्षविषयतावच्छिन्नत्वनिवेशे नानुपपत्तिलेशोऽपीति ध्येयम्।

वस्तुतस्तु पक्षतावच्छेदकावच्छिन्नप्रकारताघटितधर्मावच्छिन्नत्वं साध्यविशेष्यतानिष्ठावच्छेदकतायां निवेश्यम्। तथाच साध्यविशेष्यतानिष्ठतादृशावच्छेदकत्वसाध्याभावप्रकारतानिष्ठावच्छेदकत्वान्यतरनिरूपकत्वं प्रतिबध्यतायां फलितम्, अतो नोक्तदोष इति।

अथ तथापि साध्यप्रकारत्वावच्छिन्नप्रतिबध्यत्वनिवेशेनैव उपपत्तौ साध्याभावप्रकारत्वस्य अन्यतरकोटौ निवेशनं व्यर्थम्। न च वह्निव्याप्यवत्सधर्मा पर्वतो वह्निव्याप्यवान् इत्यादौ तादृशपर्वतो वह्निमान् न वेति संशयस्य पक्षतात्वापत्तिः, विशेष्यतावच्छेदककोटिप्रविष्टसाध्यप्रकारतायास्तदीयप्रतिबध्यतावच्छेदकत्वादिति वाच्यम्। तथापि वह्निव्याप्याभाववत्सधर्मा पर्वतो वह्निव्याप्यवान् इत्यादौ तादृशपर्वतो वह्निमान् न वेति संशयवारणायोगात् तद्वारणप्रयासस्तुल्य एव इति चेन्न। साध्याभावप्रकारतानिवेशे तत्र साक्षात्पक्षविषयतानिरूपितत्वं निवेश्यम्। साध्यप्रकारतानिवेशे तु तत्र साक्षात्पक्षविषयतानिरूपितत्वाभावात् तावत् संशयस्य असङ्ग्रहापत्तेरिति तत्त्वोक्तम्।

अथ पक्षतावच्छेदकावच्छिन्नविषयत्वघटितधर्मावच्छिन्नं

यत् साध्यविषयत्वनिष्ठमवच्छेदकत्वं तन्निरूपकत्वस्यैव प्रतिबध्यत्वे निवेशादेव सामञ्जस्ये अन्यतमाद्यभिधानं ग्रन्थकृतोऽफलमिति। न च वह्निव्याप्यकालीनः पर्वतो वह्निमान् न वेति संशयनिष्ठप्रतिबध्यताया विनिगमनाविरहेण वह्नित्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितकालत्वावच्छिन्नावच्छेदकतानिरूपितवह्निव्याप्यत्वावच्छिन्नावच्छेदकताशालिबुद्धित्वावच्छिन्नत्वेन निरुक्तरूपावच्छिन्नसाध्यविषयत्वनिष्ठावच्छेदकताकसाध्यनिश्चयप्रतिबध्यतामादाय वह्निव्याप्यकालीनः पर्वतो वह्निव्याप्यवान् इत्यादौ तादृशसंशयस्य पक्षतात्वापत्तिः, अतो मुख्यविशेष्यतात्वेनैव साध्यविषयत्वमवश्यं निवेशनीयम्, तथाच पर्वतो वह्निवान् इत्यादौ पक्षविशेष्यकसंशयसङ्ग्रहाय अन्यतराभिधानमावश्यकमिति वाच्यम्। साध्यविषयतानिष्ठावच्छेदकतायाम् अवच्छेदकतात्वानवच्छिन्नत्वनिवेशेनैव सामञ्जस्ये तत्र मुख्यत्वनिवेशान्यतरनिवेशयोरनुचितत्वात्।

न च उक्तस्थले एकत्र द्वयमितिरीत्या वह्निव्याप्यं कालत्वञ्च अवगाहमानस्य वह्निव्याप्यकालीनः पर्वतो वह्निमान् न वेति संशयस्य अप्रतिबन्धकत्वसम्पादनाय प्रतिबध्यतावच्छेदककोटौ व्याप्यत्वावच्छिन्नावच्छेदकताकालत्वावच्छिन्नविशेष्यतानिरूपितप्रकारत्वाभिन्नत्वेनैव निवेशनीया, तथाच तत्र पक्षविषयतान्तर्गतसाध्यविषयत्वनिष्ठमवच्छेदकत्वम् अवच्छेदकतात्वानवच्छिन्नमपि इत्यतो मुख्यविशेष्यतात्वेन साध्यविषयतानिवेशनमावश्यकमिति वाच्यम्। एवमपि धर्मितावच्छेदकताभिन्नत्वेन साध्यविषयताया निवेशेनैव सामञ्जस्यात्। न च साध्यविषयतानिष्ठावच्छेदकतायां "पक्षविषयताघटितधर्माव-

च्छिन्नत्वम् अवश्यं पक्षतावच्छेदकावच्छिन्नविषयताघटकसमुदायद्वयावच्छेदकताकत्वकृतं वाच्यम्। अन्यथा वह्निव्याप्यात्मकवह्निव्याप्तिविशिष्टो वह्निमान् न वेति संशयीयधर्मितावच्छेदकतायां व्याप्यत्वावच्छिन्नत्वेन व्याप्तिनिष्ठावच्छेदकतानिरूपकत्वस्य पक्षतावच्छेदकीभूतव्याप्यत्वावच्छिन्नविषयताघटिततया वह्निव्याप्यो वह्निव्याप्यवान् इत्यादौ वह्निव्याप्यो वह्निमान् न वेति संशयस्य पक्षतात्वप्रसङ्गतादवस्थ्यात् तथा उक्तनिवेशो न सम्भवत्येव। प्रतिबध्यप्रतिबन्धकभावे विषयतात्वव्याप्यप्रकारतात्वविशेष्यत्वादिनैव विषयताया निवेश्यत्वेन अप्रसिद्धिप्रसङ्गादिति वाच्यम्। पक्षतावच्छेदकावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपकविषयत्वनिष्ठावच्छेदकतानिरूपकत्वस्यैव साध्यविषयतानिष्ठावच्छेदकतायां निवेशेनैव उक्तदोषवारणसम्भवे विषयताघटकसमुदाये साध्यविषयतानिष्ठावच्छेदकतावच्छेदकत्वस्यापि अनिवेश्यत्वे न क्षतिरिति चेत्।

अत्र वयम्, अवच्छेदकघटकानाम् अवच्छेदकत्वम् इत्यपि मतं द्विविधम्। एकम् अवच्छेदकम् अपरञ्च अवच्छेदकतावच्छेदकतावत् सधर्मित्वावच्छेदकतायाम् अवच्छेद्यप्रतिबध्यत्वादिनिरूपितत्वं घटकम्। अपरञ्च अवच्छेदकघटकानां सर्वेषामेव अवच्छेदकत्वम्। न तु अवच्छेदकतावच्छेदकत्वम्। तावदेव अवच्छेदकत्वं निरवच्छिन्नमिति। तत्र द्वितीयमते उक्तविवक्षाया असम्भवात्। पक्षतावच्छेदकावच्छिन्नत्वे सति साध्यतावच्छेदकावच्छिन्नविषयत्वावच्छिन्नत्वं विवक्षणीयम्। तथाच वह्निव्याप्यो वह्निव्याप्यवान् न वेति संशयातिव्याप्तितादवस्थ्यम्। अतः पक्षत्वावच्छेदकावच्छिन्नप्रकारत्वावच्छिन्नत्वे सति साध्यतावच्छेदकावच्छिन्नत्वे सति साध्यतावच्छेदकावच्छिन्नमुख्यविशेष्यत्वावच्छिन्नत्वं वाच्यम्।

न च इदानीं मुख्यविशेष्यताप्रवेशो व्यर्थः, वह्निव्याप्यकालीनः पर्वतो वह्निव्याप्यवान् इत्यादौ तादृशपक्षे वह्निसंशयप्रतिबध्यतायाः पक्षतावच्छेदकावच्छिन्नप्रकारत्वावच्छिन्नत्वविरहेणैव वारणादिति वाच्यम्। वह्निव्याप्यो वह्निव्याप्यवान् इत्यादौ वह्न्यभावो वह्निव्याप्ये न वा इत्यादिसंशयातिप्रसङ्गवारणाय एतन्निवेशादिति ब्रूमः।

साध्यं पक्षवृत्ति न वा, साध्यं पक्षनिष्ठाभावप्रतियोगि न वा, इत्यादौ आधेयत्वसम्बन्धावच्छिन्नपक्षतावच्छेदकावच्छिन्नप्रकारतैव सुलभेति।

यत्तु साध्यवत्तानिश्चयनिवर्त्यत्वे सति बाधनिश्चयनिवर्त्यः पक्षता इति, अत्र पर्वतत्वावच्छेदेन वह्नेः साध्यतायां वह्न्यभाववत्सधर्मा वह्निमत्पर्वतो द्रव्यं न वेति संशयस्य पक्षतात्वापत्तिरिति जागदीशी। अत्रेयमाशङ्का। साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदिका सती बाधनिश्चयप्रतिबध्यतावच्छेदिका या विषयता तद्वत्त्वं तत्त्वम् इत्युक्तौ नैष दोषः। साध्याभावप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतायां साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकीभूतायां साध्याभावनिश्चयप्रतिबध्यतावच्छेदकत्वविरहात् पर्वतो वह्निमान् न वेत्यादौ उभयप्रकारतानिरूपितैकविशेष्यताया उभयनिश्चयप्रतिबध्यतावच्छेदकत्वादिति। मैवम्। पर्वतो वह्निव्याप्यवान् इत्यादौ वह्निव्याप्याभावाभाववद्वह्न्यभाववान् पर्वतो घटवान् न वेति संशयेऽतिव्याप्तेः। तत्र साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदिका या वह्न्यभावत्वावच्छिन्नप्रकारता तस्या एव वह्निव्याप्याभावाभावत्वावच्छिन्नत्वेन बाधनिश्चयप्रतिबध्यतावच्छेदकत्वात् तद्वत्त्वस्य च तत्र सत्त्वादिति भावः ?

नापि साधकबाधकमानाभावः पक्षता इत्यत्र वह्निः पर्वत-

निष्ठाभावप्रतियोगी एवं पर्वतो वह्न्यभाववान् इत्यादिनानाविधबाधनिश्चयानां सङ्ग्रहाय पक्षधर्मिकसाध्यवत्त्वविरोधिनिर्णयत्वेन नानाविधबाधनिश्चयानामनुगमः कृतो जगदीशेन। अथ अत्र निश्चयत्वं किमर्थम् इति चेदत्र, केचित् यत्रादौ बाधनिश्चयः ततस्तद्धर्मिकाप्रामाण्यज्ञानं ततोऽनुमितिः, इत्यत्र अनुमित्यव्यवहितपूर्वक्षणे कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वावच्छेदकाभावत्वाभावासत्त्वात् कारणाभावेन अनुमित्यनुपपत्तिः, प्रतियोगितायाः व्याप्यवृत्तित्वेन तदवच्छिन्नस्य अनुमित्यव्यवहितपूर्वक्षणेऽपि वृत्तित्वम्। अतस्तादृशप्रतिबन्धकतावच्छेदकीभूतधर्मावच्छिन्नप्रतियोगिताकाभावत्वाभाय निश्चयपदमित्याहुः। तन्मन्दम्। अनुपसंहारिग्रन्थस्य शिरोमणिना उक्तस्य साध्यवत्त्वाज्ञानप्रतिबन्धकनिश्चयत्वेन बाधानामनुगमस्य जगदीशेन निश्चयपदं स्वरूपकथनमिति व्याख्यानात्। केवलान्वयिग्रन्थस्य संशययोग्यताविवेचनास्थले साध्यविशिष्टपक्षज्ञानविरोधित्वेन अनुगतरूपेण अभावस्य योग्यतात्वादिति दीधितिकृता उक्तत्वाच्च।

वस्तुतस्तु कारणीभूताभावप्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणधर्मवत्त्वं प्रतिबन्धकत्वमिति असिद्धिग्रन्थस्य शिरोमणिना उक्तत्वेन तादृशानुमित्यव्यवहितपूर्वक्षणे तादृशाप्रामाण्यज्ञानाभाववैशिष्ट्यावच्छिन्नत्वरूपप्रतिबन्धकतावच्छिन्नाभावस्य सत्त्वात्। न च कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वमिति ग्रन्थकारोक्तं न सङ्गच्छते इति वाच्यम्। यथाश्रुताभिप्रायेणोक्तत्वादिति दिक्।

ननु सिद्धिगोचरेच्छामात्रस्य सिषाधयिषात्वे द्रव्यत्वेन द्रव्यज्ञानं जायताम् इतीच्छायामपि सिद्धात्मकपरामर्शाद् वह्न्यनुमितिः स्यादिति जगदीशः। अत्रेयमाशङ्का। द्रव्य-

ज्ञानं ज्ञायताम् इतीच्छायाः पूर्वं द्रव्यज्ञानं मदिष्टसाधनम् इति ज्ञानस्य आवश्यकत्वेन तस्य द्रव्यज्ञानत्वेन विरोधितया तादृशे चैव न सम्भवतीति अतो द्रव्यत्वेन इत्युक्तम्। द्रव्यत्वनिष्ठ-समवायावच्छिन्नावच्छेदकताकज्ञानं जायतामिति समुदितार्थः। द्रव्यत्वेन ज्ञानं जायताम् इत्युक्तौ द्रव्यत्वलिङ्गकानुमित्साभ्रमनिर्बन्धनान्यलिङ्गकानुमित्साप्रतिबन्धकत्वाधीनवह्न्यनुमित्यनुत्पादनिर्वाहशङ्का स्यात् अतो द्रव्यपदम्। अतएवाग्रे द्रव्यगोचरं ज्ञानं जायताम् इत्येवोक्तम्। अवच्छेदकतायां समवायावच्छिन्नत्वोपादानात् उक्तेच्छायाः पूर्वं निरूपितत्वसम्बन्धावच्छिन्नद्रव्यत्वनिष्ठावच्छेदकताकवृत्तित्वनिष्ठावच्छेदकताकेष्टसाधनताज्ञानस्य आवश्यकतया न तादृशेच्छानुपपत्तिः। न च उक्तेच्छाजनकेष्टसाधनताज्ञाने अवच्छेदकत्वांशे विशेषणीभूततद्वृत्तित्वांशे विशेषणं यद् द्रव्यत्वं तत्र द्रव्यत्वत्वस्य अनावश्यकतया तद्घटकतया समवायावच्छिन्नद्रव्यत्वनिष्ठावच्छेदकताकज्ञानसत्त्वात् तादृशेच्छा न सम्भवत्येव इति वाच्यम्। जातेः समवायान्यसम्बन्धेनापि स्वरूपतो भानस्वीकारात्। अतएव अग्रे अनुमितिविषयकत्वापेक्षया अनुमितित्वप्रकारकज्ञानत्वनिवेशे लाघवमित्युक्तम्।

तेन वह्निज्ञानं जायतामिति इच्छोत्तरं सिद्ध्युत्पादे वक्ष्यमाणस्वविषयसिद्ध्यनुपस्थितत्वविशेषणादेव तदिच्छावारणमिति जागदीशी। ननु तादृशेच्छैव न सम्भवति। स्वजनकेष्टसाधनताज्ञानात्मकवह्निज्ञानेन प्रतिबन्धात् इत्येव वक्तुमुचितम्। न च वह्निज्ञानाभावगोचरद्वेषादेव वह्निज्ञानेच्छासम्भवात् न तदसम्भवोक्तिसम्भव इति वाच्यम्। द्वेषाधीनतत्तद्धर्मप्रकारकज्ञानस्य हेतुत्वात् इति चेन्न। तत्र वह्निज्ञानशब्देन संयोगसम्बन्धावच्छिन्नवह्निप्रकारताकज्ञानस्य उक्तत्वादिति भावः।

ननु यत्र वह्निमत्तया पर्वतस्य प्रत्यक्षं जायताम् इतीच्छैव प्रत्यक्षत्वेन अनुमितिमवगाह्य वृत्ता तत्रापि सिद्धौ सत्यां अनुमित्यापत्तिरिति जागदीशी। ननु वह्नित्वावच्छिन्नाधेयतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकप्रकारतानिरूपितविशेष्यतायां प्रकृतपक्षसाध्यकानुमितिवृत्तिधर्मपर्य्याप्त्यवच्छेदकत्वानिरूपकत्वनिवेशात् नैव दोषः। न च पर्य्याप्तिनिवेशो व्यर्थ इति वाच्यम्। वह्निमत्तया पर्वतस्य सुखात्मकानुमितिर्जायताम् इत्यादीनाम् उत्तेजकत्वरक्षार्थं तदुपादानात् इत्याहु किञ्चेति।

सिद्धिसमकालीनानुमितिप्राक्क्षणस्थायिसिषाधयिषाणामुत्तेजकविधया पक्षतायां प्रवेशो व्यर्थः कारणतावच्छेदकगुरुत्वापादकश्च स्यादिति जागदीशी। अत्रेयमाशङ्का। यत्र आदौ सिद्धात्मकपरामर्शः, ततो घटेच्छा, ततः सिद्ध्यनात्मकपरामर्शः, ततोऽनुमितिः, तत्र सिद्ध्यनात्मकपरामर्शक्षणे अनुमित्यापत्तिसम्भवे कथं गौरवाभिधानमिति चेत्, सत्यम्। तत्र सिद्ध्यनात्मकपरामर्शविशिष्टाया इच्छाव्यक्तेः प्रतिबन्धकत्वादेव तदापत्त्यसम्भवात्। न च प्रतिबन्धकत्वकल्पने गौरवमिति वाच्यम्। अन्यथतैव तस्याभिधेयत्वात्।

परन्तु तत्पक्षकतत्साध्यकतल्लिङ्गकानुमितित्वावच्छिन्नं प्रत्येव पक्षतायाः कारणत्वकल्पे तल्लिङ्गकतत्पक्षकतत्साध्यकानुमितित्वप्रकारकेच्छात्वावच्छिन्नाभावः अनुगतरूपेणैव पक्षतायां निवेशनीयो लाघवात् न तु तत्तद्व्यक्तीनामभावसमुदाय इति यादृश्याहुस्त इत्युक्तमिति। अथ एवमपि पर्वतपक्षकवह्निसाध्यकधूमलिङ्गकातीतानुमिति र्जायताम् इतीच्छादशायामपि पर्वतो वह्निमान् वह्निव्याप्यधूमवान् इत्यादिपरामर्शादनुमित्यापत्तिः। न च प्रकृतपक्षसाध्यहेतुकानुमितित्वपर्य्याप्त्य-

वच्छेदकताकविषयताकेच्छात्वावच्छिन्नाभावनिवेशात् नैष दोष इति वाच्यम्। तथा सति प्रकृतपक्षसाध्यकानुमितित्वपर्य्याप्त्यवच्छेदकताकविषयताकेच्छात्वावच्छिन्नाभावनिवेशेनैव पर्वतपक्षकवह्निसाध्यकालोकलिङ्गकानुमिति र्जायताम् इतीच्छादशायां सिद्ध्यात्मकधूमपरामर्शात् अनुमित्यापत्तिवारणसम्भवे प्रकृतेऽपि यादृशयादृश इत्याद्यभिधानस्य सफलत्वसम्भवेन मिश्रमते तत्फलदर्शनस्य उन्मत्तप्रलपितत्वापत्तेरिति चेत्। अत्र केचित् प्रकृतपक्षसाध्यकानुमितित्वपर्य्याप्त्यवच्छेदकताकविषयकेच्छात्वावच्छिन्नाभावस्य अनुगतरूपेण पक्षतायां निवेशे यत्र विनश्यदवस्थवह्निधूमचक्षुःसंयोगात् पर्वतो वह्निमान् वह्निव्याप्यधूमवान् पर्वतपक्षकवह्निसाध्यकानुमितिः इष्टसाधिका, आलोकश्च वह्निव्याप्य इति ज्ञानम्, ततः पर्वतपक्षवह्निसाध्यकानुमिति र्जायतामितीच्छा, ततः सिद्ध्यनात्मकालोकपरामर्शः, ततः पर्वतो वह्निमान् इत्यनुमितिः, तत्र आलोकपरामर्शक्षणे अनुमित्यापत्तिः, पूर्वं पक्षतासत्त्वात्।

न च तत्र आलोकपरामर्शमवधूय अनुमितिरेव जायते इति वाच्यम्। प्रकारान्तरेण स्वविषयपर्य्यवसानसम्भवे इत्यादिनियमात्। न च, एवं मिश्रमतेऽपि यत्र विनश्यदवस्थवह्निचक्षुःसंयोगात् सिद्ध्यात्मकधूमलिङ्गकपरामर्शो धूमलिङ्गकपर्वतपक्षकवह्निसाध्यकानुमितीष्टसाधनत्वविषयकः, ततस्तादृशानुमितीच्छा, ततो धूमपरामर्शः, ततोऽनुमितिः, तत्र धूमपरामर्शक्षणे अनुमित्यापत्तिरिति वाच्यम्। पर्वतपक्षकवह्निसाध्यकानुमितौ धूमपरामर्शविशिष्टधूमपरामर्शत्वेन प्रतिबन्धकत्वं कल्पयित्वापि तद्वारणसम्भवात्। वैशिष्ट्यञ्च स्वाव्यवहितप्राक्क्षणवृत्तित्वस्वाप्रयोजकवृत्तित्वोभयसम्बन्धेन बोध्यमिति वदन्ति।

अन्ये तु मिश्रमते तत्पक्षकतत्साध्यकतल्लिङ्गकानुमित्सैव उत्तेजिका नान्यविधा। तथाच मिश्रमते सर्वासामेव इच्छा-व्यक्तीनाम् अनुगतरूपेण उत्तेजकत्वं सम्भवति। अस्मन्मते तु उत्तेजकीभूतानां सर्वासामनुमित्सानामनुगतरूपेण/उत्तेकत्वं न सम्भवति इति स्वमतमुपेक्ष्य परन्तु इत्यादिना मिश्रमत-मनुसृत्य यादृशयादृश इत्यस्य व्यावृत्तिरभिहिता इत्याहुः।

किञ्चेति एकाभावे अपराभाववैशिष्ट्यं विशेषणताविशेषा-वच्छिन्नाधिकरणे विशेषणतया वृत्तित्वम्। सिद्धौ अभावान्तर-वैशिष्ट्यन्तु विशेषणताविशेषावच्छिन्नाधिकरणसमवेतत्वमिति। न च समवायावच्छिन्नवृत्तित्वापेक्षया विशेषणताविशेषावच्छि-न्नाधिकरणे विशेणतया वृत्तित्वप्रवेशे किं लाघवमिति वाच्यम्। विशेषणतात्वस्य अननुगततया तत्सम्बन्धान्यसम्बन्धानवच्छिन्न-वृत्तित्वपर्य्यवसन्नस्य विशेषणताविशेषावच्छिन्नवृत्तित्वस्य सम-वायसम्बन्धावच्छिन्नवृत्तित्वापेक्षया गुरुत्वादिति।

यद्यदिच्छाव्यक्तिसत्त्वे अन्यलिङ्गकानुमित्सासत्त्वे अनु-मितिः तत्तदिच्छाविरहविशिष्टान्यलिङ्गकानुमित्सायाः प्रति-बन्धकत्वकल्पे यत्र आदौ धूममात्रपरामर्शः ततो धूमालोको-भयलिङ्गकानुमित्सा ततस्तदुभयलिङ्गकपरामर्शः ततोऽनुमितिः, अत्र उभयलिङ्गकपरामर्शोत्पत्तिक्षणे अनुमित्यापत्तिः। अग्नि-मानुमित्यनुरोधेन तदिच्छाव्यक्तेरपि उत्तेजकत्वात्। इत्या-शङ्क्य तत्तल्ल समूहालम्बनपरामर्शविशिष्टतादृशेच्छाया उत्ते-जकत्वं जगदीशेनोक्तम्। अथ अत्र तादृशपरामर्शव्यक्तित्वेन उत्तेजकत्वेऽपि तद्दोषवारणसम्भवे अलं तादृशपरामर्शविशिष्ट-तादृशेच्छात्वेन उत्तेजकतया। न च यत्र आदौ धूममात्रपरा-मर्शः ततस्तदुभयलिङ्गकानुमित्सोत्पत्तिः ततोऽपेक्षाबुद्ध्यात्मक-तदुभयपरामर्शः, ततः स्वधर्मिकाप्रामाण्यज्ञानात्मिकानुमितिः,

तदनन्तरं भस्मलिङ्गकानुमितीच्छा, तदनन्तरमनुमिते र्वारणाय तादृशपरामर्शविशिष्टतादृशेच्छात्वेन उत्तेजकत्वमुक्तमिति वाच्यम् ।

यद्‌यदप्रामाण्यज्ञानसत्त्वे सिद्धिदशायामनुमितिः तत्तदप्रामाण्यज्ञानाभावविशिष्टायाः सिद्धेः सत्त्वेन तदनन्तरमनुमिते र्वारणसम्भवे उक्तरूपेण उत्तेजकत्वाभिधानस्य असङ्गतत्वादिति चेन्न । यत्र आदौ धूममात्रपरामर्शः, तदनन्तरं धूमालोकोभयलिङ्गकानुमित्सा, ततोऽपेक्षाबुद्धात्मकस्तदुभयपरामर्शः, तत आलोकांशे प्रमात्मज्ञानात्मिकानुमितिः, तत आलोकलिङ्गकानुमितीच्छा, ततः सिद्धात्मकालोकपरामर्शः, ततोऽनुमितिः, तत्र सिद्धात्मकालोकपरामर्शोत्पत्तिदशायाम् अनुमिते र्वारणाय तादृशपरामर्शविशिष्टतादृशेच्छात्वेन उत्तेजकत्वाभिधानात् ।

वस्तुतस्तु उत्तेजकीभूतेच्छाभेदस्य अन्यलिङ्गकानुमितीच्छायां निवेशनीयपरामर्शभेदस्य अव्यावर्त्तकत्वात् । तदत्यन्ताभावनिवेशे तु प्रकृतस्थल एव उभयलिङ्गकपरामर्शक्षणे धूमलिङ्गकानुमित्यापत्तेरनुद्धारात् । तथाहि यद्‌यदिच्छाव्यक्तिसत्त्वे इत्यादिना उत्तेजकीभूततादृशोभयलिङ्गकानुमित्साभिन्नतादृशपरामर्शविरहविशिष्टेच्छाया असत्त्वेन प्रतिबन्धकाभावादे तदभिप्रायेणैव परामर्शविशिष्टेच्छाया उत्तेजकत्वाभिधानात् । भेदस्य अव्याप्यवृत्तितया परामर्शासत्त्वदशायां तद्विशिष्टभेदोऽक्षत एव इति नासङ्गतिरिति ।

न च तादृशभेदस्य तथात्वमाशङ्का यत्र आदौ धूममात्रपरामर्शः अपेक्षाबुद्धात्मकः तत आलोकलिङ्गकानुमित्सा ततो धूमलिङ्गकानुमितीच्छा ततः अनुमित्यनुपपत्तिः इत्यस्यैव वक्ष्यमाणत्वात् नेदं युक्तमिति वाच्यम् । धूमलिङ्गकानुमिती

धूमलिङ्गकानुमितीच्छाभेदस्य प्रतिबन्धकतावच्छेदकत्वे तद्दोषसम्भवेऽपि यद्यदिच्छासत्त्वे अन्यलिङ्गकानुमितीच्छादशायामनुमितिः तत्तदिच्छाभेदस्य तथात्वे तद्दोषासम्भवात्। यत्तु पर्वतधर्मिकवह्न्यनुमितिसामान्यं प्रत्येव आलोकादिलिङ्गकपरामर्शाभावविशिष्टालोकादिमात्रलिङ्गकानुमित्सात्वेन प्रतिबन्धकत्वमिति अत्र आलोकादिमात्रलिङ्गकत्वम् आलोकादिलिङ्गकत्वप्रकारतानिरूपितविशेष्यतानिरूपिता या आलोकादिभिन्नलिङ्गकत्वप्रकारता तच्छून्यत्वे सति आलोकलिङ्गकत्वप्रकारताशालित्वं नातो धूमलिङ्गिका सती या आलोकलिङ्गिका पर्वते वह्न्यनुमितिः सा जायताम् इतीच्छादशायां धूममात्रपरामर्शादनुमित्यापत्तिः।

सकलगवाश्रितत्वं गोनिष्ठभेदप्रतियोगितानवच्छेदकत्वे सति गोसमवेतत्वम् अतो न गगनादौ व्यभिचारः। एवञ्च सिद्धसाधनदानमपि सङ्गच्छते। तथा पीतवह्न्यभावाप्रकारकत्वे सति वह्निप्रकारकत्वेन वह्निसामान्याभावाप्रकारकवह्निप्रकारकत्वेन पर्वतत्वावच्छिन्नविशेष्यतानिरूपिता या वह्नित्वपर्य्याप्त्यवच्छेदकताकप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारता तच्छून्यत्वे सति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वपर्य्याप्त्यवच्छेदकताकप्रकारकत्वेन एवं रीत्या कपिलवह्न्यादिनिश्चयत्वं बोध्यम्। ननु साध्यवत्तानिश्चयत्वपदेन तदभावाप्रकारकत्वे सति तत् प्रकारकज्ञानत्वादीनां प्राचां नये समुच्चयसङ्ग्रहः सम्भवत्येव। तथाहि संयोगत्वपर्य्याप्त्यवच्छेदकताकनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छिन्नत्वत्वावच्छिन्नावच्छेदकतानिरूपकप्रतियोगितात्वावच्छिन्नसांसर्गिकविषयतानिरूपिता या वह्नित्वपर्य्याप्त्यवच्छेदकताकसांसर्गिकविषयतानिरूपितवह्नि-

त्वपर्य्याप्तच्छेदकताकप्रकारता तच्छालिज्ञानत्वं सामानाधिकरण्येन तन्निश्चयत्वम्।

एवं पर्वतत्वावच्छिन्नविशेष्यतानिरूपितस्वरूपसम्बन्धावच्छिन्नवह्न्यभावत्वावच्छिन्नप्रकारताशून्यत्वे सति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितत्वपर्वतत्वव्यापकसंयोगत्वपर्य्याप्त्यवच्छेदकताकसांसर्गिकविषयतानिरूपितवह्नित्वपर्य्याप्त्यवच्छेदकताकप्रकारताशालिज्ञानत्वम् अवच्छेदावच्छेदेन निश्चयत्वमिति वाच्यम्। अवच्छेदावच्छेदेन निश्चयत्वस्य घटकीभूतवह्न्यभावप्रकारताघटकीभूतप्रतियोगित्वसांसर्गिकविषयतावच्छेदकतावच्छेदकतायां यदि संयोगत्वपर्य्याप्त्यवच्छेदकताकत्वं निविशते तदा पर्वतत्वव्यापकत्वविशिष्टसंयोगेन वह्निकोटिसंशयसाधारणत्वात्। यदि च संयोगत्वनिष्ठावच्छेदकताकत्वं तदा महानसीयसंयोगेन वह्न्यभावनिश्चयात्मकपर्वतत्वव्यापकसंयोगेन वह्न्यवगाहिनिश्चये व्याप्तत्वात्।

न च सांसर्गिकविषयतावच्छेदकतावच्छेदकतायां पर्वतत्वव्यापकत्वनिष्ठावच्छेदकताभिन्नं संयोगत्वनिष्ठावच्छेदकताभिन्नं यदवच्छेदकत्वं तदनिरूपकत्वं निवेशनीयम् अतो नोक्तदोष इति वाच्यम्। तथाहि प्रकारतावच्छेदकभेदेन संसर्गतावच्छेदकभेदेन च निश्चयत्वाननुगमनिबन्धनगौरवस्य दुर्वारत्वात्। न च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताविशिष्टज्ञानत्वं निश्चयत्वम्। प्रकारतावैशिष्ट्यं स्वनिरूपकत्वस्वाश्रयप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपिताभावत्वावच्छिन्नप्रकारताशून्यत्वोभयसम्बन्धेन। तादृशप्रकारताशून्यत्वञ्च तादृशप्रकारत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताप्रतियोगिताकभेदवत्त्वम्। प्रकारतायां स्वाश्रयत्वञ्च

त्वावच्छेदकतापर्य्याप्त्यवच्छेदकधर्मावच्छिन्नपर्य्याप्तिकत्वस्वनिरू-पितसांसर्गिकविषयतावच्छेदकेतरानवच्छिन्नानिरूपितत्वस्वसम्ब-न्धावच्छिन्नावच्छेदकताकनिरूपकावच्छिन्नत्वत्वावच्छिन्नावच्छे-दकतानिरूपकप्रतियोगितात्वावच्छिन्नसांसर्गिकविषयतानिरू-पितत्वोभयसम्बन्धेन अतो न गौरवमिति वाच्यम्।

तथापि अयं पुरुषः स्थाणु र्न वा पर्वतो वह्निमान् गुणवान् न वा इत्यादिभावद्वयकोटिकसंशयातिव्याप्तेरशक्यपरिहारात्। न च भावद्वयकोटिकसंशय एव विवादग्रस्तः क्व अतिव्याप्ति-रिति वाच्यं तथाप्यव्याप्यवृत्तितादशायामनुत्पन्नस्य पर्वत-त्वावच्छेदेन वह्न्यभावादिप्रकारकसमुच्चयस्य दुःसङ्ग्र-हतया दुर्वारत्वादित्यत आह वस्तुत इत्यादि। न चात्र साध्यवान् पक्ष इत्यादि। निश्चयस्याप्यसङ्ग्रहः पक्षनिष्ठविशेष्यतायां साध्यतावच्छेदकावच्छिन्नप्रकारताभिन्न-पक्षतावच्छेदकनिष्ठप्रकारतानिरूपितत्वस्य सत्त्वादिति वाच्यम्। स्वस्य धर्मितावच्छेदकत्वापत्तिभिया धर्मितावच्छेद-कनिष्ठप्रकारतानिरूपितविशेष्यतान्तरस्वीकारात्। यदि च स्वस्य धर्मितावच्छेदकत्वेऽपि न क्षतिः न च तस्य पक्षताव-च्छेदकावच्छिन्नविशेष्यतानिरूपितपक्षतावच्छेदकनिष्ठप्रकार-ताशालिनिश्चयत्वेन तथाविधसंस्कारजनकत्वापत्तिरिति वाच्यम्। तदीयकार्य्यकारणभावादौ पक्षतावच्छेदकावच्छिन्न-विशेष्यतावच्छिन्ननिरूपकताकपक्षतावच्छेदकप्रकारतानिवे-शादेव तद्वारणात्। एवं क्रमेण आपत्त्यन्तरस्यापि वारणम् बोध्य-मिति जगदीशस्य मते तत्र विशेषणतात्मकमेव इति विभाव्यते इति। तदा तादृशप्रकारताभिन्नप्रकारतायाम् अवच्छेदकता-त्मकत्वं निवेश्यम्।

न च तथापि वह्निमत्पर्वतो घटवान् इत्यादिनिश्चयस्य

वह्निनिश्चयत्वानुपपत्तिः जगदीशमते तत्र विशेष्यताद्वयास्वीकारात् पर्वतत्वावच्छिन्नविशेष्यतायां वह्नित्वावच्छिन्नप्रकारतान्यतादृशघटत्वावच्छिन्नप्रकारतानिरूपितत्वादिति वाच्यम्। अवच्छेदकतानात्मकवह्नित्वावच्छिन्नप्रकारतानिरूपितत्वे सति अवच्छेदकतानात्मकवह्नित्वावच्छिन्नप्रकारतान्यप्रकारतानिरूपिता या विशेष्यता तदन्या वह्नित्वावच्छिन्नप्रकारतानिरूपिता या विशेष्यता तच्छालिज्ञानत्वस्य विवक्षितत्वात्। अथ पर्वतः अभाववान् इत्याद्यभावसाध्यकस्थले पर्वतः अभाववान् न वा इति संशयस्य अभावनिश्चयत्वापत्तिः। वह्निसाध्यकस्थले महानसीयवह्निमान् इत्यादिनिश्चयासङ्ग्रहभयेन अन्यत्वप्रतियोगिप्रकारतायां साध्यतावच्छेदकमात्रावच्छिन्नत्वादिनिवेशायोगात्। न च अन्यत्वप्रतियोगिप्रकारतायां साध्यतावच्छेदकावच्छिन्नप्रकारत्वानिरूपितत्वं निवेशनीयम् अतो नातिव्याप्तिरिति वाच्यम्। पर्वतो वह्निमद्वह्निमान् इत्यादिनिश्चयस्य असङ्ग्रहप्रसङ्गात्। न च अभावाभाववान् इत्याद्यनाहार्यनिश्चयस्य अप्रसिद्ध्या तादृशसंशय एव असिद्ध इति वाच्यम्।

तथापि पर्वतो घटाभाववान् न वा इत्यादिसंशयस्य अभावनिश्चयत्वापत्ते र्दुर्वारत्वात् इति चेन्न। स्वान्यावच्छेदकतानात्मकप्रकारतानिरूपितत्वस्वनिरूपितत्वोभयसम्बन्धेन अवच्छेदकतानात्मकसाध्यतावच्छेदकावच्छिन्नप्रकारतावदन्या या साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यता तच्छालिज्ञानत्वस्य विवक्षितत्वात्। वह्निमत्पर्वतो घटवान् घटवान् पर्वतो वह्निमान् इत्यादिनिश्चयसङ्ग्रहाय अवच्छेदकतानात्मकत्वद्वयम्। स्वान्यत्वञ्च स्वसामानाधिकरण्यस्वनिरूपकत्वोभयसम्बन्धेन प्रतियोगितावदन्य-

स्वप्रतियोगिकभेदवत्त्वादिकं बोध्यम्। एकत्र द्वयमितिरीत्या वह्निघटवान् पर्वत इत्यादिनिश्चयसङ्ग्रहाय स्वान्यप्रकारतायां प्रकारत्वानवच्छिन्नत्वं निवेशनीयम्। एकत्र द्वयमितिरीत्या ज्ञानस्य संशयवैलक्षण्यानुरोधेन प्रकारतयोः अवच्छेद्यावच्छेदकभावस्य स्वीकार्यत्वादित्यादिकं बोध्यम्।

एवञ्च अभाववान् न वा इत्यादिसंशयस्य न अभावनिश्चयत्वम्। तथाहि तत्र अभावत्वाभावप्रतियोगिकत्वैतदुभयधर्मावच्छिन्नप्रकारतायां तज्ज्ञानीयशुद्धाभावत्वावच्छिन्नप्रकारताव्यक्तेः भेदसत्त्वेन स्वान्यत्वपदेन तस्य धर्त्तव्यत्वात्। तादृशभेदे च उक्तसम्बन्धेन शुद्धाभावत्वावच्छिन्नप्रकारताव्यक्तिनिष्ठप्रतियोगितावदन्यत्वस्य च सत्त्वादिति महानसीयवह्निमान् पर्वत इत्यत्र च महानसीयत्ववह्नित्वोभयधर्मावच्छिन्नप्रकारताव्यक्तेरेकत्वेन तत्र स्वप्रतियोगिकभेदासत्त्वात् न तस्य वह्निनिश्चयत्वानुपपत्तिरिति विभावनीयम्।

एवञ्च पर्वतत्वावच्छेद्यत्वावगाहि पर्वतधर्मिक वह्निविधेयकानुमितौ पर्वतत्वावच्छेद्यत्वावगाहि पर्वतधर्मिक वह्निनिश्चयत्वेन प्रतिबन्धकत्वमिति। यत्तु प्रतिबध्यतावच्छेदककोटौ सामानाधिकरण्येनानुमितिव्यावर्त्तक पर्वतत्वावच्छेद्यत्वावगाहित्वविशेषणं व्यर्थम्। पर्वतधर्मिक इत्यत्र पर्वतत्वपर्य्याप्त्यवच्छेदकताकविशेष्यतानिवेशेनैव नीलपर्वतो वह्निमान् इत्यादिसामानाधिकरण्यमात्रेण अनुमितिवारणसम्भवादिति। तन्मन्दम्। पर्वतत्वावच्छेद्यत्वावगाहिनीलपर्वतो वह्निमान् इत्याद्यनुमितेरसङ्ग्रहप्रसङ्गात्। न च तत्र कथं पर्वतत्वावच्छेद्यत्वभानं पर्वतत्वस्य विशेष्यतावच्छेदकैकदेशत्वादिति वाच्यम्। विशेष्यतावच्छेदकैकदेशधर्मावच्छेद्यत्वभानोपगमे क्षतिविरहादिति अत आह। अत्र च

पर्वतधर्मिकत्वं पर्वतत्वविशिष्टविशेष्यकत्वमात्रम्। तेन पर्वतत्वावच्छेदेन वह्निनिश्चये पर्वतो वह्निमान् इत्याकारिकाया इव नीलपर्वतो वह्निमान् इत्याकारिकाया अपि अनुमितेः नोत्पत्तिरिति।

न च नीलपर्वतो वह्निमान् इति निश्चयसत्त्वेऽपि पीतपर्वतो वह्निमान् इत्यनुमिति र्न स्यात् तस्या अपि पर्वतत्वावच्छेद्यत्वावगाहित्वे सति पर्वतत्वविशिष्टविशेष्यकवह्निविषयकत्वात् नीलपर्वतो वह्निमान् इत्याद्यनुमितौ तादृशनिश्चयस्य विरोधितया तदसङ्ग्रहभयेन प्रतिबध्यतावच्छेदकविशेष्यतायां पर्वतत्वपर्य्याप्त्यवच्छेदकताकत्वस्य निवेशयितुमशक्यत्वादिति वाच्यम्। यद्धर्मपर्य्याप्त्यवच्छेदकताकविशेष्यताविशिष्टविशेष्यतानिरूपितवह्नित्वावच्छिन्नविषयताकपर्वतत्वावच्छेद्यत्वावगाह्यनुमितित्वावच्छिन्नं प्रति तद्धर्मपर्य्याप्त्यवच्छेदकताकविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकपर्वतत्वावच्छेद्यत्वावगाहिनिश्चयत्वेन प्रतिबन्धकत्वस्य उक्तत्वात्। विशेष्यतायां विशेष्यतावैशिष्ट्यं स्वावच्छेदकतापर्य्याप्तधर्मव्याप्यधर्मपर्य्याप्तिकावच्छेदकत्वस्वावच्छेदकतापर्य्याप्तधर्मव्याप्यकधर्मपर्य्याप्तिकावच्छेदकताकत्वान्यतरसम्बन्धेन इति बोध्यम्।

अवच्छेदावच्छेदेन सिद्धेः प्रतिबध्यदिशि अवच्छेदावच्छेद्यत्वप्रवेशो व्यर्थ इति आशङ्क्य यत्र अवच्छेदावच्छेदेन सिद्धिः ततः अवच्छेदावच्छेदेन अनुमित्सा ततः अवच्छेदावच्छेदेन इव सामानाधिकरण्येनापि अनुमित्यापत्तिरित्युक्तम्। अथ अत्र सामानाधिकरण्ये हेतुभूतस्य सामानाधिकरण्येन अनुमित्साभावविशिष्टसिद्ध्यभावस्य असत्त्वेन अनुमित्यापादनमयुक्तम्। न च यत्र आदौ अपेक्षाबुद्ध्यात्मकसामानाधिकरण्येन बाधनिश्चयः ततो लौकिकप्रत्यक्षात्मकः अवच्छेदावच्छे-

देन सिद्धात्मकपरामर्शः ततः अवच्छेदावच्छेदेन अनुमित्सा तदुत्तरं पर्वतधर्मिकवह्निविधेयकानुमित्यापत्तिरेव सामानाधिकरण्येन अनुमित्यापत्तिरिति अनेन विवक्षिता इति वाच्यम्। विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः कार्य्यजनकतया तद्रूपावच्छिन्नस्यापि आपादयितुमशक्यत्वात्। न च अवच्छेदावच्छेदेन सिद्धेः प्रतिबध्यदिशि अवच्छेदावच्छेद्यत्वावगाहित्वानुपादानादेव सामानाधिकरण्येन अनुमितिं प्रत्यपि तस्याः प्रतिबन्धत्वमायातं सामानाधिकरण्येन अनुमितिं प्रति लाघवात् सामानाधिकरण्यमात्रेण सिद्धिरेव विरोधित्वात् न तु सिद्धिमात्रस्य इत्यभिप्रायेण उक्तापत्तिरिति वाच्यम्। सामानाधिकरण्येन अनुमितिं प्रति सामानाधिकरण्येन सिद्धेरेव प्रतिबन्धकत्वे संसर्गतावच्छेदकतापर्य्याप्तेरवश्यं निवेशात्। तदपेक्षया सिद्धिमात्रस्य तत्र तथात्वे पर्य्याप्त्यनिवेशरूपलाघवसत्त्वादेव सामानाधिकरण्येन सिद्धेरेव प्रतिबन्धकत्वकल्पनायोगात्।

न च सिद्धिमात्रस्य विरोधित्वपक्षे अवच्छेदावच्छेदेन सिद्धिधर्म्मिकाप्रामाण्यग्रहाभावकूटनिवेशस्य आवश्यकतया तदनिवेशरूपलाघवादेव सामानाधिकरण्येन सिद्धेः प्रतिबन्धकत्वं युक्तमिति वाच्यम्। उक्तापत्तिभिया अवच्छेदावच्छेदेन सिद्धेः प्रतिबध्यदिशि अवच्छेदकावच्छेद्यत्वावगाहित्वनिवेशेऽपि सामानाधिकरण्येन अनुमितिस्थले अवच्छेदावच्छेदेन सिद्धिधर्म्मिकाप्रामाण्यग्रहाभावकूटस्य अवच्छेदकत्वस्य त्वयापि वाच्यत्वात्। सामानाधिकरण्येन अनुमितिस्थले तादृशाप्रामाण्यग्रहाभावादिकमादाय विवेचनायास्तुल्यत्वाच्च। तस्मात् सामानाधिकरण्येन अनुमितेः कारणान्तरविरहादेव उक्तापत्त्यभावात् न तर्ह्यैवं दुर्वारमेव इति चेत्।

मैवम्। तदभावाप्रकारकत्वे सति तत्प्रकारकत्वरूपनिश्चयत्व-वादिनां प्राचां मते नैव एतद्ग्रन्थकरणात्। तन्मते सामानाधिकरण्येन निश्चयत्वस्य अवच्छेदावच्छेदेन निश्चयत्वस्य द्वैविध्यात्। सामानाधिकरण्येन अनुमितिं प्रति वस्तुतः प्रतिबन्धकत्वद्वयम्।

इदानीञ्च सामानाधिकरण्येन अनुमितिं प्रति सामानाधिकरण्यमात्रेण सिद्धावेव विरोधित्वं कल्पयति। अवच्छेदावच्छेदेन सिद्धेः प्रतिबध्यदिशि अवच्छेदकावच्छेद्यत्वानिवेशे एतदेव लाघवम्। अन्यथा लाघवानवकाशेन न च इत्यादिशङ्काया एव अनुत्थानप्रसङ्गात्। न च प्रतिबध्यदिशि अवच्छेदकावच्छेद्यत्वावगाहित्वानिवेश एव लाघवमिति वाच्यम्। तदनिवेशरूपयत्किञ्चिल्लाघवार्थं यदि अवच्छेद्यावच्छेद्यत्वावगाहित्वं नोपादीयते तदा तत्पक्षसाध्यकानुमितेः कारणतावच्छेदककोटौ अनन्तानां सामानाधिकरण्येन अनुमित्साविरहकूटानां प्रवेश्यतया तादृशलाघवस्य अकिञ्चित्करत्वात्। न च तत्पक्षकतत्साध्यकानुमितौ अवच्छेदावच्छेदेन - अनुमित्साविरहविशिष्टावच्छेदकत्वावगाहिसिद्ध्यभावस्यैव पक्षतात्वं वाच्यम्। तावतैव तादृशेच्छाविरहकूटानां व्युदास इति वाच्यम्। सामानाधिकरण्येन अनुमित्सादशायां तदवच्छेदेन सिद्धिसत्त्वे सामानाधिकरण्येन अनुमित्यनुत्पादापत्तेः। अतो यद्‌यदिच्छासत्त्वे अवच्छेदावच्छेदेन सिद्धिसत्त्वे तत्पक्षकतत्साध्यकानुमितिः प्रामाणिकी तत्तदिच्छाविरहकूटविशिष्टाया अवच्छेदावच्छेदेन सिद्धेरभावस्यैव पक्षतात्वं वाच्यम्। अतः सुतरां सामानाधिकरण्येन अनुमित्साविरहकूटादेः प्रवेशः।

तथाच अवच्छेदावच्छेदेन सिद्धेः प्रतिबध्यतावच्छेदक-

कोटौ. अवच्छेदकावच्छेद्यत्वानिवेशे सामानाधिकरण्येन अनुमित्साभावकूटानामनन्तानां निवेशत्वेन लाघवानवकाशभिया सामानाधिकरण्येन अनुमितौ सामानाधिकरण्येन अनुमित्साविरहविशिष्टसामानाधिकरण्येनैव सिद्धेः प्रतिबन्धकत्वं स्वीकार्य्यम्। अत उक्तस्थले सामानाधिकरण्येन अनुमित्साभावविशिष्टसामानाधिकरण्यमात्रावगाहिसिद्ध्यभावसत्त्वात् न तदापत्त्यसम्भव इति ध्येयम्।

केचित्तु पक्षतावच्छेदकसामानाधिकरण्येन एकत्र पर्वते साध्यसिद्धौ यदि पर्वतान्तरे तादृशानुमितिरानुभविकी तदा धर्म्मिविशेषोऽपि निवेश्य इति प्रागुक्तकल्पाभिप्रायेण इयमापत्तिः। तत्कल्पे पर्वतत्वरूपेण तत्पर्वतधर्म्मिकसाध्यनिश्चयस्य विरोधिता। पर्वतत्वावच्छेदेन वह्न्यनुमितौ तदवच्छेदेन साध्यनिश्चयस्य विरोधिता। एवं धर्म्मिविशेषानियन्त्रितपर्वतत्वसामानाधिकरण्यावगाहिवह्न्यनुमितौ पर्वतत्वावच्छेदेन सिद्धेर्विरोधिता। इति रीत्या त्रितयप्रतिबध्यप्रतिबन्धकाभावः अवश्यं वक्तव्यः। न च पर्वतत्वावच्छेदेन सिद्धेस्तावत् पर्वतविषयकतया धर्म्मिकल्पनमवलम्ब्यैव अवच्छेदावच्छेदेन सिद्धिदशायां सामानाधिकरण्येन अनुमित्यापत्तिवारणसम्भवात्। सामानाधिकरण्येन अनुमितिं प्रति अवच्छेदावच्छेदेन सिद्धेः प्रतिबन्धकत्वकल्पनं व्यर्थमिति वाच्यम्। पर्वतत्वावच्छेद्यत्वावगाहियत्किञ्चित्पर्वतविषकसाध्यनिश्चयदशायां पर्वतान्तरे तादृशानुमिते र्वारणायैव तत्सार्थक्यात्। तथाच अवच्छेदावच्छेदेन सिद्धेः प्रतिबध्यतावच्छेदकांशे सामानाधिकरण्यावगाहित्वस्य अवच्छेदकावच्छेद्यत्वावगाहित्वस्य द्वयोरेव न निवेशः। किन्तु सामान्यतस्तत्पक्षकतत्साध्यकानुमितिसामान्यं प्रत्येव प्रतिबन्धकत्वम् इत्यभि-

प्रायेण उक्तदूषणं समाहितम्। अवच्छेदावच्छेदेन सिद्धीच्छातः अत्रच्छेदावच्छेदेनैव तत्सामानाधिकरण्येन अनुमित्यापत्तेरिति अत्रापि सिद्धिपदं यत्किञ्चित् पर्वतविषयकं ग्राह्यम्। नातो धर्मिविशेषकल्पनया अनुपपत्तिरिति प्राहुः।

अपरे तु अनुगताप्राधान्यज्ञानस्य उत्तेजकत्वानुरोधेन सामानाधिकरण्येन अनुमितिं प्रति सिद्धिद्वयस्य विभिन्नरूपेण प्रतिबन्धकत्वं नतु एकरूपेण इति प्राचीनमताभिप्रायेण। तथाच सामानाधिकरण्येन अनुमितिं प्रति सामानाधिकरण्येन सिद्धे विरोधित्वम् आशङ्क्य उक्तापत्तिरित्याहुः। तथाच संयो-गत्वमात्रावच्छिन्नसंसर्गताकपर्वतधर्मिकवह्निविधेयकानुमितिं प्रति संयोगसंसर्गकपर्वतधर्मिकवह्निनिश्चयत्वेन एकरूपेण सिद्धिद्वयं प्रतिबन्धकमिति। अथात्र पर्वतत्वपर्य्याप्त्यवच्छेदकताकविशेष्यतानिरूपितसंयोगत्वपर्य्याप्त्यवच्छेदकताकसांसर्गिकविषयतानिरूपितवह्नित्वपर्य्याप्त्यवच्छेदकताकविधेयताकानुमितित्वावच्छिन्नं प्रत्येव एकरूपेण सिद्धिद्वयं प्रतिबन्धकमित्यर्थः।

अन्यथा नीलपर्वतो वह्निमान् पर्वतस्तत्संयोगेन वह्निमान् पर्वतस्तद्वह्निमान् इत्यासामनुमितीनां पर्वतो वह्निमान् इति सामानाधिकरण्येन निश्चयस्य प्रतिबध्यतापत्तेः प्रतिबन्धकदिशि तु न क्वापि पर्य्याप्तिनिवेशः। एवञ्च नीलपर्वतो वह्निव्याप्यवान् इति निश्चयात्मको यदा अवच्छेदावच्छेदेन शुद्धपर्वते वह्निनिश्चयः तदा नीलपर्वतो वह्निमान् इत्यनुमित्यापत्तेरिति चेन्न। नीलपर्वतो वह्निमान् इत्यनुमितिकार्य्यकारणभावमादायैव तदापत्तिवारणात्। तथाहि सामानाधिकरण्येन नीलपर्वतत्वपर्य्याप्त्यवच्छेदकताकविशेष्यताकवह्न्यनुमितिं प्रति नीलपर्वतत्वावच्छिन्नविशेष्यताकवह्निमत्तानिश्चय-

त्वेन इव पर्वतत्वावच्छेदेन वह्निमत्तानिश्चयत्वेनापि प्रतिबन्ध-कत्वं वक्तव्यम् श्वेतपर्वतो वह्निमान् इत्यादौ अपि बोध्यम्।

तथाच न अवच्छेदावच्छेदेन सिद्धिदशायां तेषामापत्तिः। न च एवं सामान्यतः सामानाधिकरण्येन पर्वतत्वावच्छिन्न-धर्मिकवह्न्यनुमितिं प्रति अवच्छेदावच्छेदेन वह्निनिश्चयत्वेन प्रतिबन्धकत्वकल्पनयैव उक्तापत्तिवारणसम्भव इति कथं नील-पर्वतत्वाद्यनन्तधर्मान्तर्भावेन अनन्तकार्य्यकारणभावकल्पन-मिति वाच्यम्। सामान्यतस्तत्पक्षकतत्साध्यकानुमितिं प्रति अवच्छेदावच्छेदेन सिद्धेः प्रतिबन्धकत्वे यद्यदिच्छासत्त्वे अवच्छेदावच्छेदेन सिद्धिसत्त्वे सामानाधिकरण्येन पर्वतधर्मि-कवह्न्यनुमितिः प्रामाणिकी तत्तदिच्छाविरहकूटविशिष्टाया अवच्छेदावच्छेदेन सिद्धेः प्रतिबन्धकत्वम्। तथा सति नील-पर्वते वह्न्यनुमितिर्जायताम् इतीच्छादशायाम् अवच्छेदावच्छे-देन सिद्धिसत्त्वे नीलपर्वतो वह्निमान् इत्यनुमितिवत् पर्वतो वह्निमान् इत्यनुमित्यापत्तेर्दुर्वारत्वात्। न च तावतापि शुद्धपर्वतत्वसामानाधिकरण्येन वह्न्यनुमितौ सिद्धिमात्रस्य प्रतिबन्धकत्वं तिष्ठतु तथापि नीलपर्वतत्वाद्यनन्तधर्मान्तर्भावेन कार्य्यकारणभावानन्त्यकल्पनं व्यर्थमिति वाच्यम्। पर्वते वह्न्यनु-मितिर्जायताम् इतीच्छायाम् अवच्छेदावच्छेदेन पर्वतो वह्नि-मान् इति निश्चयात्मकनीलपर्वते शुद्धपर्वते च परामर्शात् पर्वतो वह्निमान् इत्यनुमितेरिव नीलपर्वतो वह्निमान् इत्यनु-मित्यापत्ते दुर्वारत्वात् इत्यगत्या तदानन्त्यस्वीकार इति ध्येयम्।

अथ तत्पक्षसाध्यकानुमितौ सामान्यतः पक्षताहेतुरिति-कल्पे सामानाधिकरण्येन सिद्ध्यात्मकावच्छेदावच्छेदेन परा-मर्शात् अवच्छेदावच्छेदेन अनुमिति न स्यात्। सिषाधयिषा-

विरहविशिष्टसिद्धाभावस्य असत्त्वादिति चेन्न। अवच्छेदावच्छेदेन अनुमितौ अवच्छेदावच्छेदेन सिद्धेः सामानाधिकरण्येन ऽनुमितौ च सिद्धिमात्रस्य विरोधित्वमस्त्येव। किन्तु अनुमित्सायाः विशेष्यानिवेशेन सामान्यतः अनुमित्सात्वेन निवेशाभिप्रायेणैव यद्वेति कल्पानुसरणात्।

अथ सिषाधयिषाया अनुगततया तस्या अपि विशेष्यावश्य-निवेशनीयतया पूर्वतः अत्र लाघवाभावेन यद्वेति कल्पानुसरणं व्यर्थमिति चेन्न। सामान्येच्छात्वावच्छिन्नाभावस्यैव अत्र कल्पे निवेशात्। सिषाधयिषाविरहकूटस्य अनिवेशादेव पूर्वतो लाघवासम्भवात्। न च घटादीच्छासत्त्वे सिद्धात्मकपरामर्शादनुमित्यापत्तिः इच्छाविरहविशिष्टसिद्ध्यभावसत्त्वादिति वाच्यम्। अत्र कल्पे सिषाधयिषाया इव इच्छाया अपि प्रतिबन्धकतान्तरस्वीकारस्य आवश्यकत्वात्। सिषाधयिषात्वस्य अनुगतरूपस्य अप्रसिद्ध्या यद्यदिच्छासत्त्वे तत्तत्सिद्धिसत्त्वे तत्तदनुमित्यनुत्पादः प्रामाणिकः। तत्तदिच्छात्वेन प्रतिबन्धकतया घटेच्छासत्त्वेऽपि सिद्धिसत्त्वेन अनुमित्यनुत्पादेन घटेच्छाया अपि प्रतिबन्धकत्वेन उक्तापत्त्यसम्भवात्। न च तथापि घटेच्छाविरहादेः प्रतिबन्धकाभावमुद्रया कारणान्तरकल्पनापत्तिरिति पक्षताशरीरे लाघवार्थमेव एतत्कल्पानुसरणात्। तत्तदिच्छाभावकूटत्वावच्छिन्नाभावत्वेन एकरूपेण वा प्रतिबन्धकाभावानां हेतुत्वस्य विवक्षितत्वान्न दोष इदमप्यत्र बोध्यम्। सामानाधिकरण्येन सिद्धिकालीनेत्यत्र मात्रपदार्थाप्रवेशादेव सिद्धिद्वयस्य ग्राह्यत्वात् न सामानाधिकरण्येन सिद्धिकालीन इत्युक्तौ अवच्छेदावच्छेदेन सिद्धेरसङ्ग्रह इति।

तथाच संयोगसम्बन्धावच्छिन्नाधेयतासम्बन्धेन पर्वतनिष्ठ-

प्रकारतानिरूपितवह्नित्वावच्छिन्नविधेयताकानुमितिं प्रति सा-
दृश्यसम्बन्धावच्छिन्नपर्वतनिष्ठप्रकारतानिरूपितवह्नित्वावच्छिन्न-
विशेष्यताकनिश्चयत्वेन प्रतिबन्धकत्वमिति। अत्र पर्वतीय-
वह्निः शुक्लत्वव्याप्यवान् इत्यादिपरामर्शजन्ये पर्वतीयवह्निः
शुक्ल इत्याद्यनुमितौ व्यभिचारवारणाय विधेयतानिवेशः।

वस्तुतस्तु अप्रसिद्धमाध्यकपरामर्शस्य विशेष्यविधया साध्य-
विधेयकानुमितिं प्रत्येव हेतुत्वम्। अन्यथा गोत्वव्यापका-
भाववत्तापरामर्श एव गोत्वव्यापकत्वांशे भ्रमत्वज्ञानास्कन्दितो
यत्र गोत्वाभावे गोत्वाभावान्वयपरामर्शः तेन जनितायां विशे-
षणविधया गोत्वाभावविधेयकानुमितौ व्यभिचारापत्तेः। अप्रा-
माण्यज्ञानास्कन्दितस्यैव तद्व्यापकाभाववत्तापरामर्शस्य तद-
भावानुमितिहेतुत्वादिति। न च उक्तभ्रमत्वज्ञानस्य उत्ते-
जकत्वास्वीकारादेव व्यभिचारवारणसम्भवात् किमर्थं साध्य-
विशेष्यकानुमितिं प्रत्येव व्यतिरेकपरामर्शस्य हेतुत्वकल्पन-
मिति वाच्यम्। उक्तभ्रमत्वज्ञानस्य अनुत्तेजकत्वे यत्र आदौ
अन्वयपरामर्शः ततो बाधादिज्ञानवशादनुमितिमवधूय अप्रा-
माण्यज्ञानास्कन्दितव्यतिरेकपरामर्शः ततः स्वांशे अप्रामाण्य-
ज्ञानात्मिकानुमितिः तत्र ततोऽनुमितिवारणाय विनिगमका-
भावाद् व्यतिरेकपरामर्शधर्मिकाप्रामाण्यग्रहस्य उत्तेजकत्वा-
वश्यकतया तत्रैव व्यभिचारवारणाय साध्यविशेष्यकानुमितिं
प्रत्येव व्यतिरेकपरामर्शकल्पनाया आवश्यकत्वात्। उक्तानु-
मित्युत्तरं परामर्शादनुमित्यर्थम् उक्तानुमितिधर्मिकाप्रामाण्य-
ज्ञानस्य असिद्धिमुद्रया प्रतिबन्धकतायाम् उत्तेजकत्वावश्यक-
त्वाच्च।

अथ अप्रामाण्यज्ञानानास्कन्दितव्यतिरेकपरामर्शाव्यवहि-
तोत्तरजायमानसाध्यविधेयकानुमितिं प्रत्येव अप्रामाण्यग्रहा-

नास्कन्दितव्यतिरेकपरामर्शत्वेन हेतुत्वं वक्तव्यम्। तावतैव उक्तव्यभिचारवारणसम्भवात् किमर्थं साध्यविशेष्यकानुमितिं प्रत्येव तस्य हेतुत्वकल्पनम? न च कार्य्यतावच्छेदकोटौ अप्रामाण्यग्रहाभावनिवेशेऽपि यदा अपेक्षावुद्ध्यात्मकव्यतिरेक-परामर्शः ततस्तद्धर्म्मिकाप्रामाण्यग्रहात्मकान्वयपरामर्शः ततः अन्वयपरामर्शधर्म्मिकाप्रामाण्यज्ञानात्मकाप्रामाण्यज्ञानास्कन्दि-तसाध्यविधेयकानुमितिः तत्र व्यभिचारः। उक्तानुमितिरप्रा-माण्यग्रहानास्कन्दितव्यतिरेकपरामर्शोत्तरजायमानत्वेन निरु-क्तकार्य्यतावच्छेदकाक्रान्ततया तदव्यवहितपूर्वक्षणे अप्रामाण्य-ज्ञानानास्कन्दितव्यतिरेकपरामर्शाभावादिति वाच्यम्।

उक्तदोषभिया साध्यविशेष्यकानुमितित्वस्य तत्कार्य्यता-वच्छेदकत्वेऽपि यत्र आदौ धूमव्यापकवह्न्यभाववान् ह्रद इत्यपेक्षावुद्ध्यात्मकज्ञानं ततो धूमव्यापकालोकाभाववान् ह्रद इति ज्ञानं पूर्वज्ञानधर्म्मिकाप्रामाण्यज्ञानात्मकं तत आलोका-भावांशे अप्रामाण्यग्रहात्मिका अप्रामाण्यज्ञानास्कन्दिता साध्यविशेष्यकानुमितिः तत्र अनुमितेः अप्रामाण्यज्ञानानास्क-न्दितधूमव्यापकवह्न्यभाववत्तानिश्चयोत्तरजायमानत्वेन धूम-व्यापकवह्न्यभाववत्तानिश्चय कार्य्यतावच्छेदकाक्रान्ततया तद-व्यवहितपूर्वक्षणे अप्रामाण्यज्ञानानास्कन्दित धूमव्यापकवह्न्य-भाववत्तानिश्चयाभावेन व्यभिचारस्य तौल्यात्। तदर्थं तत्तत्-क्षणवृत्तित्वविशिष्टाप्रामाण्यज्ञानाभावानाम् उत्तेजकविधया भवता अवश्यं निवेशनीयः तथा मयापि अन्वयपरामर्शकाली-नाकारणतायां तत्तत्क्षणवृत्तित्वविशिष्टाप्रामाण्यज्ञानव्यक्ती-नामभावस्य उत्तेजकविधया निवेशः कार्य्यः।

"एवञ्च कार्य्यतावच्छेदके अप्रामाण्यग्रहाभावोऽपि न निवे-शनीय इति चेत्? सत्यम्। तत्कारणतायाम् अनन्ततत्तत्-

क्षणादिवृत्तित्वविशिष्टाप्रामाण्यग्रहाभावानाम् अन्वयपरामर्श-
कालीनप्रतियोगिकानां निवेशापेक्षया लाघवेन साध्यविधेय-
कत्वस्य कार्य्यतावच्छेदकत्वं घटकत्वकल्पनमुचितमेवेति अन्य-
क्ततोऽभिप्रायः। अन्यथा साध्यविधेयकत्वमपि न देयं स्यात्।
अनुमितित्वमात्रस्य द्वित्वादिकमादाय व्यभिचारवारकस्यैव
सम्यक्त्वात् इति।

दीधितौ अन्ये त्विति। द्वित्रिक्षणान्तरितायामिति। न
च मिश्रादिभिरपि सिषाधयिषाचतुर्थक्षणे अनुमितेः स्वीकार्य्य-
तया सिषाधयिषाषष्ठक्षणे अनुमितेरस्वीकार्य्यतया च तादृश-
स्थलयोरसङ्ग्रहाभ्यामनुपपत्तिरिति वाच्यम्। द्वित्रिक्षणास्वान्त-
रितपदेन अनुमित्यव्यवहितद्वितीयक्षणोत्पत्तिकध्वंसप्रति-
योग्युत्पत्तिकत्वस्य अनुमित्यव्यवहितपूर्वतृतीयक्षणोत्पत्ति-
कध्वंसप्रतियोग्युत्पत्तिकत्वस्य च विवक्षितत्वात्। दिवसा-
न्तरीयसिषाधयिषावारणाय प्राथमिकोत्पत्तिप्रवेशः। यत्तु
द्वित्रिक्षणान्तरितत्वादिकम् अव्यवहितपूर्वद्वितीयक्षणोत्पत्ति-
कध्वंसप्रतियोगित्वादिरूपम् अनुमित्सायामेव न तु अनुमित्सोत्-
पत्ताविव्यर्थः। इति तन्न साधुदर्शनाविरोधिधर्माश्रयरूपाव्य-
वहितार्थकाभ्यन्तरितशब्दस्य मुख्यार्थत्यागे बीजाभावादिति।

जागदीश्यां तच्च न तत्तदनुमित्सोत्पत्तिध्वंसविशिष्टत्वं
तथा सति अनुमित्सोत्पत्त्यनन्तरक्षणे अनुमित्यनुत्पादापत्तेः।
सिषाधयिषोत्पत्तिध्वंसविशिष्टस्य तद्विषयसिद्धिप्रागभावस्य
असत्त्वादिति। न च तदनुमित्सायोग्यत्वस्य अप्रसिद्ध्या तत्त-
दनुमित्सायोग्यताविरहकूटविशिष्टसिद्ध्यभावरूपपक्षतापि अप्र-
सिद्धा इति। तदनुक्त्वा स्थलविशेषे अनुमित्यनुत्पत्तिकथन-
मयुक्तमिति वाच्यम्। पक्षतायां अप्रसिद्धिभिया तत्तत्यानु-
मित्सायास्तत्र अघटकत्वमभिप्रेत्यैव तथाभिधानादिति। नच

सिद्धिकालीनानुमित्सायाः विषयीभूतैकानुमित्यनुत्पाददशायामपि दिनान्तरभावि स्वविषयीभूतानुमित्यन्तरप्रागभावसत्त्वात् उत्तरकालमनुमित्यन्तरापत्तिरिति वाच्यम्? अनुमित्साप्रागभावविरहविशिष्टस्य तत्तदनुमित्साभूतसिद्धिप्रागभावकूटस्य विवक्षितत्वादिति।

अथ स्वविषयसिद्धिप्रागभावस्य स्वविषयसिद्धिविशिष्टान्यत्वविशेषणेनैव उक्तदोषवारणसम्भवे कूटनिवेशो व्यर्थः। वैशिष्ट्यञ्च एकक्षणावच्छिन्नैकात्मवृत्तित्वरूपं बोध्यम्। न च प्रागभावस्य प्रतियोगिनाश्यतामते स्वविषयसिद्धिप्रागभावमात्रस्यैव स्वविषयीभूतसिद्धिविशिष्टतया तदन्यस्य अप्रसिद्धिः अत एतावान् प्रयास इति वाच्यम्। तन्मताश्रयणे कूटनिवेशे अनुमित्युत्तरम् अनुमित्यन्तरापत्तितादवस्थ्यात्, तन्मतस्यापि अप्रामाणिकत्वाच्च। न च यत्र आदौ अनुमितिः जायतामितीच्छा अनुमितित्वेन प्रत्यक्षविषयिणी वृत्ता ततः प्रत्यक्षात्मकसिद्ध्यात्मकपरामर्शः ततः अनुमितिर्न स्यात् तत्रत्यानुमितिप्रागभावस्य स्वविषयीभूतप्रत्यक्षात्मकसिद्ध्याविशिष्टत्वादिति वाच्यम्। स्वविषयपदेन विषयावच्छेदकावच्छिन्नस्य विवक्षितत्वात्।

न च तथापि यत्र आदौ प्रत्यक्षाव्यतिरिक्तं पर्वते वह्निज्ञानं जायतामितीच्छा ततः प्रत्यक्षात्मकसिद्ध्यात्मकपरामर्शः ततोऽनुमितिर्न स्यात् स्वविषयतावच्छेदकीभूतज्ञानत्वावच्छिन्नविशिष्टान्यत्वस्य प्रागभावे विरहादिति वाच्यम्। स्वनिरूपितोद्देश्यतावच्छेदकतापर्य्याप्त्यधिकरणधर्मपर्य्याप्तिकावच्छेदकतावच्छेदकताकप्रतियोगिताकभेदवत्त्वेन प्रागभावस्य विशेषणीयत्वादिति चेन्न। यत्र आदौ अनुमितिः जायतां शाब्दबोधश्च जायतामिति समूहालम्बनेच्छानन्तरं प्रत्यक्षात्मसिद्ध्यात्मकपरामर्शः ततोऽनुमितिः ततोऽनुमित्यन्तरापत्तेः शाब्दबोध-

विशिष्टान्यत्वमादाय तदुभयरतया स्वविषयतावच्छेदकताप्रत्यधिकरणधर्मपर्य्याप्तिकावच्छेदकताक भेदकूटत्वनिवेशस्य आवश्यकतया कूटनिवेशध्रौव्ये तदतिरिक्तानां निवेशस्य आधिक्यप्रसङ्गात् इत्येव रमणीयः समाधिः।

तथापि वह्न्यनुमितित्वप्रकारेण अतीतानागतगोचरेच्छया सिद्धिकाले वह्न्यनुमिति र्न स्यात् तद्विषयानुमितिप्रागभावकूटस्य तदानीमसत्त्वात् तदनुमित्यपूर्वक्षणवृत्तित्वस्य तत्तदनुमित्याविषयसिद्धीनां तत्तदनुमित्याकालीनत्वस्य वा तत्तदनुमित्याविषयसिद्धिप्रागभावानां विवक्षया कथञ्चित् तद्वारणेऽपीति। न तु अतीतानुमितिप्रागभावे, स्वप्रागभावविरहवैशिष्ट्याभावात् स्वप्रागभावविरहविशिष्टो यः स्वविषयसिद्धिप्रागभावः तत्कूटविरहविशिष्टसिद्ध्यभावस्य तदानीमसत्त्वात् किमर्थं सिद्ध्यादौ स्वपूर्वक्षणावृत्तित्वादिविशेषणमिति चेन्न। स्वप्रागभावविरहवैशिष्ट्यस्य स्वविषयसिद्धिप्रागभावकूटत्वावच्छिन्नाभावप्रतियोगितावच्छेदकविधया एव निविष्टतया उक्तस्थलीय स्वविषयसिद्धिप्रागभावकूटत्वावच्छिन्ने स्वप्रागभाववैशिष्ट्यस्य अप्रसिद्ध्या स्वप्रागभावविरहवैशिष्ट्य स्वविषयसिद्धिप्रागभावकूटत्वोभयावच्छिन्नाभाववैशिष्ट्यसिद्ध्यभावरूपपक्षतायास्तत्र असत्त्वात् अनुमित्यनुपपत्तिरतः तद्विशेषणसार्थक्यम्।

न च स्वप्रागभावविरहवैशिष्ट्यं तादृशकूटाभावप्रतियोगितावच्छेदकतया न निवेश्यं किन्तु स्वप्रागभावविरहविशिष्टस्वविषयसिद्धिप्रागभावाविषयकापेक्षाबुद्धिविशेषविषयत्वावच्छिन्नाभाव एव पक्षताशरीरे निवेश्यः तावतैव उक्तस्थलीयदोषवारणात् जगदीशोक्तविशेषणवैफल्यमिति वाच्यम्। यत्र क्रमेण सिद्ध्यात्मकपरामर्शानुमित्यानुमितयः तत्र अनुमित्योत्पत्तिकाले अनुमित्यापत्तेः। स्वप्रागभावविरहविशिष्ट-

स्वविषयसिद्धिप्रागभावविषयकापेक्षाबुद्धिविषयत्वरूपकूटत्वाव-च्छिन्नस्य सिद्धिकाले सत्त्वेन तादृशकूटत्वावच्छिन्नाभाव-विशिष्टसिद्ध्यभावरूपपक्षतायास्तत्र सत्त्वात्।

न च एवं स्वप्रागभावविरहविशिष्टत्वस्य तादृशाभावप्रति-योगितावच्छेदकतया निविष्टत्वेऽपि अपेक्षाबुद्धिविशेषविषय-त्वरूपकूटत्वस्य कतिपयस्वविषयसिद्धिप्रागभावमात्रविषयका-पेक्षाबुद्धिमादाय स्वपूर्वक्षणावृत्तिकतिपयस्वविषयसिद्धिप्राग-भावेऽपि पर्य्याप्तत्वात् तादृश यत् किञ्चित् कूटत्वमादाय एव उक्तस्थलीयदोषवारणसम्भवात् स्वपूर्वक्षणावृत्तित्वादिविशेषणं व्यर्थमिति वाच्यम्। यत्र क्रमेण अनुमित्सासिद्ध्यात्मकपराम-र्शानुमितयः तत्र स्वप्रागभावविरहविशिष्टकतिपयस्वविषय-सिद्धिप्रागभावमात्रवृत्तिकूटत्वावच्छिन्नमादाय अनुमित्यन्तर-मनुमित्यापत्तिवारणाय तादृशसिद्धिप्रागभावकूटत्वपदेन स्ववि-षयसिद्धिप्रागभावत्वावच्छिन्नपर्य्याप्तिककूटत्वमेव विवक्षणी-यम्। तथाच कतिपयस्वविषयसिद्धिप्रागभावकूटत्वस्य स्ववि-षयसिद्धिप्रागभावत्वावच्छिन्नपर्य्याप्तिकत्वाभावे तदादाय नोक्त-स्थले अनुमित्यन्तरापत्तिः। इत्थञ्च तादृश यत्किञ्चित् कूटत्वस्य तद्रूपत्वाभावेन तस्य धर्त्तुमशक्यत्वात् तादृशस्थले अनुमित्युप-पत्त्यर्थमेव स्वपूर्वक्षणावृत्तित्वादेः सिद्ध्यादौ निवेशावश्यकत्वम्। पर्य्याप्तौ तादृशप्रागभावावच्छिन्नत्वञ्च न्यूनाधिकवृत्तिव्यावर्त्तकं स्वरूपसम्बन्धरूपं समनैयत्यं वा इत्यन्यदेतत्।

अनुमितिद्वयं जायतामितीच्छया अनुमितिद्वयं न स्यात् तदनुमित्साविषयीभूतानुमितिप्रागभावकूटस्य प्रथमानुमित्युत्-पत्तिदशायामसत्त्वादिति। अथ स्वाव्यवहितप्राक्क्षणवृत्ति-त्वसम्बन्धेन स्वविषयसिद्ध्यनुपहितत्वेन स्वविषयसिद्धीनां विशे-षणीयत्वात् नैष दोषः। तादृशसिद्ध्यात्मकपरामर्शस्यापि तदु-

त्तरजातया स्वविषयसिद्ध्या उपहितत्वात्। न च यत्र अनु-मितिद्वयं जायतामितीच्छा ततोऽनुमितिः ततृतीयक्षणे सिद्ध्यात्मकपरामर्शः तदनन्तरमनुमित्यनुपपत्तिः स्वद्वितीय-क्षणानुमितेः स्वपञ्चमक्षणोत्पन्नानुमितेरव्यवहितप्राक्क्षण-वृत्तित्वेन तादृशसम्बन्धेन स्वविषयसिद्ध्यनुपहितस्वविषयसिद्धि-प्रागभावकूटविरहात्।

न च इष्टापत्तिः स्वपञ्चमक्षणपर्य्यन्तम् अनुमितिस्वीकारा-दिति वाच्यम्। स्वाव्यवहितप्राक्क्षणवृत्तित्वपदेन स्वप्राग-भावाधिकरणकालप्रागभावाधिकरणस्वप्रागभावाधिकरणक्षण-वृत्तित्वस्य विवक्षितत्वात्। न च एवं यत्र आदौ अनुमिति जायतामितीच्छा ततः सिद्ध्यात्मकपरामर्शः ततोऽनुमित्यन्तरं तत्र सिद्ध्यात्मकपरामर्शतृतीयक्षणे पुनरनुमित्यापत्तेः सिद्धि-द्वितीयक्षणोत्पन्नानुमितेः सिद्धिपञ्चमक्षणोत्पन्नानुमित्या स्ववि-षयसिद्ध्या उपहितत्वात् स्वविषयसिद्ध्यनुपहितत्वस्वविषय-सिद्धिप्रागभावकूटस्य सिद्धिद्वितीयक्षणेऽपि सत्त्वादिति वाच्यम्। स्वध्वंसाधिकरणकालध्वंसानधिकरणस्वसमयध्वंसाधिकरणवृ-त्तित्वस्वसामानधिकरण्योभयसम्बन्धेन सिद्धिसत्त्वस्य सिद्ध्य-नुपहितत्वप्रतियोगितावच्छेदकस्य विशेषणीयत्वात्।

न च यत्र आदौ अनुमिति जायतामितीच्छा ततः सिद्ध्या-त्मकपरामर्शः ततोऽनुमितिः तदनन्तरं पुनः सिद्ध्यात्मकपरा-मर्शः ततोऽनुमितीच्छा ततोऽनुमितिः तत्र प्रथमसिद्धितृतीय-क्षणे पुनरनुमित्यापत्तेः प्रथमसिद्धिद्वितीयक्षणोत्पन्नानुमितेः प्रथमसिद्धिपञ्चमक्षणोत्पन्नानुमित्या सिद्धिविशिष्टस्वविषयसिद्ध्या उपहितत्वेन सिद्धिविशिष्टस्वविषयसिद्ध्यनुपहितस्वविषयसिद्धि-प्रागभावकूटस्य प्रथमसिद्धिद्वितीयक्षणे प्रथमानुमित्युत्पत्ति-क्षणेऽपि सत्त्वादिति वाच्यम्। स्वप्रयोज्यस्वविषयसिद्ध्यनुप-

हितत्वेनैव स्वविषयसिद्धीनां विशेषणीयत्वात् । तत्र द्वितीयानुमितेः प्रथमानुमितीच्छाप्रयोज्यत्वाभावात् । एवञ्च स्वविषयसिद्धेर्विशेषणमपि सिद्धिमात्रं न देयम् । स्वप्रयोज्यत्वनिवेशेनैव प्रागुक्तदोषासम्भवादिति चेन्न । कार्य्योत्पादादेरिव कार्य्याव्यवहितपूर्वत्वादेरपि संसर्गतया प्रकारकताया जनकतावच्छेदकत्वासम्भवादिति सर्वं चतुरस्रम् ।

दीधितौ सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तर इत्यादि । अथ इच्छाविरहविशिष्टत्वनिवेशेनैव सिषाधयिषासिद्धिपरामर्शानुमितिस्थले अनुमित्युत्पत्तिसम्भवे स्वक्षणे सिषाधयिषाविरहवैशिष्ट्यनिवेशो व्यर्थ इति । न च यत्र आदौ सिषाधयिषा ततो घटेच्छासिद्ध्यात्मकपरामर्शानुमितयः तत्र पक्षतासम्पत्तये तन्निवेश इति वाच्यम् । विशेष्यदले सिषाधयिषाया अनुगतरूपेण निवेशाशक्यत्वेन यद्‌यदिच्छासत्त्वे इत्यादिरीत्या निवेश्यतया घटेच्छाया उत्तेजकतया विशेष्यदलादेव तदनुपपत्तिवारणादिति चेन्न । यत्र आदौ घटेच्छा ततः सिद्ध्यात्मकपरामर्शः ततः सिद्धंशे अप्रामाण्यग्रहः ततश्च अनुमिति र्भवेत् तत्र अप्रामाण्यग्रहोत्पत्तिक्षणे अनुमित्युत्पादवारणाय तादृशविशेषणस्य आवश्यकत्वात् । अथ सिषाधयिषाया अपि अननुगतत्वात् तासां विरहोऽत्र केन रूपेण निवेशनीयः ? । यदि च यद्‌यदिच्छासत्त्वे अनुमितिरित्यादिरीत्या निवेश्यते तदा सिषाधयिषासिद्धिपरामर्शानुमितिस्थले पक्षताभङ्गप्रसङ्गः ।

न च यादृशयादृशेच्छासत्त्वे सिद्धौ सत्यामनुमितिः तादृशतादृशेच्छात्वावच्छिन्नाभावत्वेन तन्निवेशः कार्य्यः तथाच यत्र क्रमेण वह्न्यनुमितीच्छासिद्ध्यात्मकपरामर्शानुमितयः तत्र उक्तरूपावच्छिन्नस्य उत्तेजकत्वेन सिषाधयिषासिद्धिपरामर्शानु-

मितिस्थलीयेच्छाया अपि तादृशरूपाक्रान्ततया उत्तेजकत्व-मक्षतमेवेति वाच्यम्। अनुगतरूपेण उत्तेजकत्वानुसरणे सिषाधयिषाघटेच्छासिद्ध्यात्मकपरामर्शानुमितिस्थले घटेच्छाया अपि तथात्वेन घटेच्छासिद्ध्यात्मकपरामर्शाप्रामाण्यग्रहानुमिति-स्थले अप्रामाण्यग्रहोत्पत्तिक्षणे अनुमित्यापत्ते वारणायोगा-दिति चेन्न। पर्वतधर्मिकवह्न्यनुमितित्वप्रकारकेच्छात्वाद्यन्य-ज्ञानत्वप्रकारकेच्छात्वानुमितित्वप्रकारकेच्छात्वादीनां प्रत्येक-धर्मावच्छिन्नाभावकूटत्वेन एव निवेश्यत्वात् यत्र वह्न्यनुमिति-र्जायतामितीच्छा ततः पर्वतमात्रे सिद्ध्यात्मकः पर्वते महानसे च धूमादिपरामर्शः ततो महानसे वह्न्यनुमितिः प्रागुजात-सिद्ध्यंशे अप्रामाण्यज्ञानं ततः पर्वते वह्न्यनुमितिः तत्र अप्रा-माण्यग्रहोत्पत्तिकाले पर्वते वह्न्यनुमिते वारणाय तत्तत्-क्षणादेःप्रतिबन्धकत्वम् अनन्यगतिकतया स्वीकार्य्यमिति ध्येयम्।

जागदीश्यां सिषाधयिषाविरहविशिष्ट स्वस्वक्षणाव्यव-हितोत्तरत्वञ्च सिषाधयिषाविरहविशिष्टस्वक्षणध्वंसाधिकरण-कालध्वंसानधिकरणत्वे सति तादृशस्वसमयध्वंसाधिकरणत्व-मिति। न च स्वप्रतियोगिनिरूपकध्वंसप्रतियोगित्वसम्बन्धेन स्वक्षणध्वंसाधिकरणकालध्वंसाधिकरणत्वाभाववत्त्वविरहक्षणे-नैव पूर्वकाले वारणसम्भवे विशेष्यदलं व्यर्थमिति वाच्यम्। तावतापि उत्तरकाले वारणायोगात्। न च निरुक्तसम्बन्ध-विशेषणतोभयसम्बन्धेन तादृशाभाववत्त्वं विवक्षणीयम् अतो नोक्तदोष इति वाच्यम्। तद्रूपेण संसर्गतानभ्युपगमात्। अथ अव्यवहितोत्तरत्वघटकविशेष्यदले तादृशपदं व्यर्थमिति चेन्न। यत्र क्रमेण सिषाधयिषासिद्ध्यात्मकपरामर्शाप्रामाण्यग्रहा-स्कन्दितानुमितयः तत्र अंशे मित्यन्तरमनुमित्यापत्तेः परामर्शा-

त्मकसिद्धेः तादृशपदार्थाघटितनिरुक्ताव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतया अनुमित्यात्मकसिद्धेरप्रामाण्यज्ञानास्कन्दिततया अविरोधित्वात् उक्तानुमितित्वतीयक्षणे अनुमित्यर्थं तदप्रामाण्यग्रहव्यक्तेरुत्तेजकत्वावश्यकत्वात्।

यद्यपि तादृशपदसत्त्वेऽपि यत्र सिषाधयिषानाशकाले सिद्ध्यात्मकपरामर्शः ततः अप्रामाण्यग्रहास्कन्दितानुमितिः तत्र तदनन्तरम् अनुमित्यापत्तिवारणाय तत्तदप्रामाण्यज्ञानादेरुत्पत्त्यादिसम्बन्धेन प्रतिबन्धकत्वं तत्तत्क्षणवृत्तित्वविशिष्टत्वेन अनुमितिप्राक्क्षणवृत्तित्वविशिष्टत्वेन वा तेषामुत्तेजकत्वं वा यथा वक्तव्यं तथा अत्रापि तत्तदप्रामाण्यग्रहादेस्तथाविधत्वादिकल्पनादेव उक्तापत्तिवारणसम्भवः। तथापि अनन्तस्थले तत्तदप्रामाण्यग्रहादीनां विरोधित्वकल्पनया अनन्तकार्यकारणभावकल्पनामपेक्ष्य तदकल्पनादिलाघवार्थमेव तादृशपदमिति ध्येयम्।

वस्तुतो लाघवाभिप्रायेणैव तादृशपदमुक्तम्। लाघवञ्च यत्र आदौ सिषाधयिषा ततः सिद्ध्यात्मकपरामर्शः ततोऽनुमितिः तत्रत्यसिद्धिव्यक्तीनां भेदाप्रवेशादेवेति तत्त्वम्। यत्र क्रमेण अनुमित्सासिद्धिपरामर्शानुमितयः तत्र सिद्ध्युत्पत्तिक्षणपर्यन्तस्थायिनम् अनुमित्सापूर्वोत्पन्नस्थूलकालोपाधिमादाय परामर्शक्षणेऽपि पक्षताभङ्गप्रसङ्ग इति। न च यत्र स्वकाले प्रतियोग्यनधिकरणत्वनिवेशेनैव उक्तस्थले पक्षतासम्भवे स्ववृत्तियावद्ध्वंसवत्त्वरूपक्षणत्वप्रवेशे गौरवमिति वाच्यम्। भेदस्य अव्याप्यवृत्तितानये प्रतियोग्यनधिकरणत्वस्यापि तत्र सत्त्वात्। न च नोपादेयमेव तत् किन्तु निरवच्छिन्नविशेषणतासम्बन्धेन सिषाधयिषाविरहवैशिष्ट्यं वक्तव्यं किं क्षणत्वनिवेशेनेति वाच्यम्। क्षणत्वं न स्ववृत्तियावद्ध्वंसविशिष्टत्वं किन्तु क्षणिकान्यशब्दा-

नामतिरिक्तपदार्थस्य क्षणत्वमित्यस्याग्रे ग्रन्थकृता निष्कर्षणीयतया तन्मत एव एतद्ग्रन्थानुसरणात्।

वस्तुतस्तु स्ववृत्ति यावद्ध्वंसविशिष्टत्वस्य क्षणिकत्वने स्थूलकालस्य सिषाधयिषाधिकरणस्य सिद्धिद्वितीयक्षणस्थायित्वेऽपि क्षणत्वेन तत्र सिषाधयिषाविरहस्य निरवच्छिन्नाधिकरणताया अप्रसिद्ध्या तन्निवेश एव युक्तः। तन्मते क्षणिकपदार्थाभावेन तथाविधसूक्ष्मकालाप्रसिद्धेः। तेन पूर्वकल्पे क्षणिकान्यशब्दान्यक्षणत्वमतस्वीकारेऽपि स्वाश्रयत्वस्वप्रतियोग्याश्रयत्वोभयसम्बन्धेन ध्वंसवदन्यसमयत्वरूपक्षणत्वस्य तद्रूपेण अनुगतस्य निवेशावश्यकतया गौरवपरीहार इति परास्तं क्षणत्वस्यापि अतिरिक्तस्य निष्कर्षितार्थे तदपि सम्यक्।

अथ उक्तस्थले परामर्शक्षणे विशेषणदलसत्त्वेऽपि तादृशस्वक्षणध्वंसाधिकरणत्वरूपविशेष्यदलासत्त्वात् कथं स्वसमयाव्यवहितोत्तरत्वस्य परामर्शक्षण एव पर्य्यवसानादिति लिखनसङ्गतिः १। न च विशेष्यदले क्षणत्वप्रवेशे किं मानमिति वाच्यम्। सिषाधयिषासिद्ध्यात्मकपरामर्शाप्रामाण्यज्ञानास्कन्दितानुमितयः यत्र क्रमेणोत्पन्नाः तत्र तदनन्तरमनुमित्यापत्तेः तत्रानुमितिव्यक्तेरप्रामाण्यज्ञानास्कन्दिततया अप्रतिबन्धकत्वात्। पूर्वोत्पन्नसिद्धेस्तु सिषाधयिषापूर्वोत्पन्न स्वोत्पत्तिक्षणपर्य्यन्तस्थायिस्थूलकालध्वंसाधिकरणीभूततादृशानधिकरणत्वविशिष्टक्षणोत्पत्तिकानुमितिकतया अप्रतिबन्धकत्वाच्च। क्षणत्वनिवेशे तु तादृशस्थूलकालस्य क्षणत्वाभावादेव तदापत्तिवारणसम्भवात् उक्तानुमितेस्तृतीयक्षणे अनुमित्यर्थं तदप्रामाण्यज्ञानव्यक्तेरुत्तेजकत्वावश्यकत्वात् विशेष्यदलस्य यथाश्रुताभिप्रायेण तद्ग्रन्थसङ्गतेः प्रथमक्षणपदस्य तत्र व्यावृत्तेरक्षतेश्च।

केचित्तु यत्र अनुमित्युत्पत्तितृतीयक्षणे सिद्ध्यात्मकपरामर्शः

ततः स्वाशे अप्रामाण्यज्ञानात्मकानुमितिः तत्र तदनन्तरमनु-मित्यापत्तिः। प्रथमसिद्धेः तादृशानुमितिकतया अनुमित्या-त्मकसिद्धेः अप्रामाण्यज्ञानास्कन्दिततया अविरोधित्वात् अतः अप्रामाण्यज्ञानानां तत्तत्क्षणवृत्तित्वविशिष्टत्वेन अभावो भेदा-नुयोगिसिद्धौ निवेश्यः। तथाच प्रागुक्तस्थले दोषाभावेन विशे-ष्यदले क्षणत्वनिवेश एव नास्तीत्याहुः। तच्चिन्त्यम्।

सिषाधयिषाविरहविशिष्टस्वक्षणविशिष्टक्षणोत्पत्तिकानुमि-तिकभिन्नसिद्ध्यभावस्यैव पक्षताभिप्रायेण एतद्ग्रन्थतात्प-र्यात्। स्वक्षणवैशिष्ट्यञ्च स्वक्षणध्वंसाधिकरणसमयध्वंसाधि-करणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वस्वक्षणध्वं-साधिकरणत्वोभयसम्बन्धेन, तथाच क्षणत्वं सक्तन्निविष्ट-मितिभावः।

सत्यन्तमात्रोक्तौ सिद्धिमात्रस्यैव प्रायशः स्वक्षणध्वंसाधि-करणकालध्वंसानधिकरणीभूतस्वपूर्वकालोत्पत्तिकानुमितिक-तया तद्भिन्नसिद्ध्यप्रसिद्धिरिति जागदीशी। न चात्र कथं प्रायश इत्युक्तमिति वाच्यम्। 'सिषाधयिषापुटितसिद्धेरेव सिषाधयिषाविरहविशिष्टस्वक्षणाप्रसिद्ध्या स्वपदेनोपादातुमश-क्यतया तदन्यत्वमस्ति इत्यभिप्रायकत्वात् यत्पुरुषीययदङ्कुर-विशेषसिद्धेः पूर्वं तदनुमिति र्न जाता तदीयतदङ्कुरविशेष-सिद्धेस्तदन्यत्वं सम्भवि इत्यभिप्रायिकं तदिति केचित्।

न च तथापि पुटितसिद्धौ तदन्यसिद्धित्वसत्त्वात् तदप्रसि-द्ध्यभिधानमयुक्तमेवेति वाच्यम्। तदन्यसिद्धेरप्रसिद्धेरित्यत्र तदन्यसिद्धिपदेन पक्षताघटकसिद्धेरेव उक्तत्वात् नानुपपत्ति-रिति ध्येयम्। यत्र क्रमेण केवलसिद्धिपरामर्शौ तत्रापि अनु-मित्यापत्तिरित्यादिना द्वितीयक्षणपदस्य व्यावृत्तिरुक्ता तत्र सिषाधयिषाव्यवच्छेदकतया केवलपदमस्तु तथापि सिद्धिरा-

मर्शयोः क्रमिकत्वाभिधानमसङ्गतं सिद्ध्यात्मकपरामर्शादपि तदापत्तिसम्भवादिति चेन्न। तद्व्यक्तिं प्रति तद्व्यक्ते र्हेतुत्वमिति विशेषकार्य्यकारणभावमादाय सिद्ध्यात्मकतादृशपरामर्शस्य हेतुत्वास्वीकारेणैव तत्रापत्तिवारणसम्भवात् व्याहतत्वसङ्गतिः अतस्तयोः क्रमिकत्वमुक्तम्। इदानीन्तु सिद्धिनाशदशायां तृतीयक्षणे अनुमित्यर्थं तत्परामर्शव्यक्तेस्तद्धेतुत्वावश्यकत्वादिति ध्येयम्।

यदुपाध्यवच्छिन्नस्य अव्यवहितोत्तरक्षणत्वं तदवच्छेदेन अनुमित्युत्पत्तिसत्त्वस्य विवक्षितत्वादिति। तथाच सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरकालविशिष्टा या वृत्तिता तद्विशिष्टानुमितिकभिन्नत्वमेव विवेशनीयम्। वैशिष्ट्यञ्च स्ववृत्तिध्वंसत्वव्यापककालावच्छेदकताकनिरूपकत्वसम्बन्धेन। वृत्तिता च स्वसमयध्वंसाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वकालिकोभयसम्बन्धेन ग्राह्या इति भावः।

न च स्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्वेतरानुमितिकत्वमेव प्रवेश्यताम् उत्पत्तेः स्वेतरत्वापेक्षया गुरुत्वादिति वाच्यम्। यत्र साध्यानुमितिद्वयं जायतामितीच्छया प्रथमं साध्यतद्व्याप्ययोरपेक्षाबुद्ध्यात्मकानुमितिः ततः साध्यानुमित्यन्तरं तत्र साध्यस्य अनुमित्यन्तरप्रसङ्गादिति। न च स्वेतरत्वं पारिभाषिकमेव निर्वाच्यम्। तच्च स्वाधिकरणक्षणवृत्तिभेदप्रतियोगितावच्छेदकत्वरूपम्। तथाच द्वितीयानुमितेरेव प्रतिबन्धकतया नापत्तिः अनुमितेस्तदनन्तरमिति वाच्यम्। चरमानुमितेरपेक्षाबुद्ध्यात्मकत्वस्थले तद्दोषवारणायोगात्।

न च सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणवृत्तित्वस्ववृत्तिप्रागभावप्रतियोगित्वोभयसम्बन्धेन सिद्धिविशिष्टा-

नुमितिकभिन्नत्वमेव प्रवेश्यतां गुरुतरोत्पत्त्यादिप्रवेशो व्यर्थ इति वाच्यम् । यत्र आदौ सिषाधयिषा ततः सिद्ध्यात्मकपरामर्शः ततः अप्रामाण्यज्ञानास्कन्दितानुमितिः ततोऽपि अनुमित्यापत्तेः अनुमित्यात्मकसिद्धेः अप्रामाण्यज्ञानास्कन्दिततया परामर्शात्मकसिद्धेश्च तादृशानुमितिकतया अविरोधित्वात् ।

न च सिषाधयिषाविरहविशिष्टक्षणविशिष्टानुमितिकभिन्नत्वमेव प्रवेश्यतां वैशिष्ट्यञ्च स्वावृत्तित्वस्वाव्यवहितोत्तरक्षणवृत्तित्वोभयसम्बन्धेन तथाच उक्तस्थले प्रथमसिद्धेरपि तादृशानुमितिकभिन्नत्वेन विरोधितया नानुमित्यनन्तरमनुमित्यापत्तिरिति एवञ्च एतत्कल्पोक्तदोषोऽपि नास्तीति वाच्यम् । यत्र आदौ सिद्ध्यात्मकपरामर्शः ततः सिद्धंशे अप्रामाण्यज्ञानं ततोऽनुमितिः तत्र अप्रामाण्यज्ञानोत्पत्तिदशायामनुमित्यापत्तिः तादृशसिद्धेस्तादृशानुमितिकत्वेन अविरोधित्वात् ।

न च यत्र आदौ भाविज्ञानं सिद्धंशे अप्रमा इत्यप्रामाण्यज्ञानं ततः सिद्ध्यात्मकपरामर्शः ततः अप्रामाण्यज्ञानास्कन्दितानुमितिः तदनन्तरमनुमित्यापत्तिवारणाय भवता अव्यवहितोत्तरत्वघटकविशेष्यदलघटकीभूतस्वाधिकरणक्षणे सिषाधयिषाविरहवदप्रामाण्यज्ञानाभावस्यापि अवश्यं निवेशनीयतया मयापि सिषाधयिषाविरहविशिष्टाप्रामाण्यज्ञानाभावविशिष्टक्षणविशिष्टानुमितिकभिन्नत्वं निवेशनीयं अतो नोक्तस्थले अप्रामाण्यग्रहोत्पत्तिदशायामनुमित्यापत्तिरिति वाच्यम् । यत्र आदौ तत्क्षणे अनुमिति जायतामिति स्वपञ्चमक्षणोत्पत्तिकानुमितिगोचरेच्छा तन्नाशक्षणे सिद्ध्यात्मकपरामर्शः तन्नाशक्षणे चानुमितिः तत्र सिद्ध्यात्मकपरामर्शद्वितीयक्षणे अनुमित्यापत्तेर्दुर्वारत्वात् । परामर्शात्मकसिद्धेः स्वादृशानुमितिकत्वेन अविरोधित्वात् ।

न च तथापि तादृशस्थले सिषाधयिषापञ्चमक्षणे अनु-मित्यनुपपत्ति र्दुर्वारा इति वाच्यम्। तद्दोषस्य एतत्कल्पो-परि वक्ष्यमाणदोषसमशीलत्वात्। न च प्रागुक्तस्थले अनु-मित्यापत्तिवारणाय वरं स्वक्षणाव्यवहितोत्तरक्षणविशिष्टान-मितिकभिन्नत्वं प्रवेश्यतां किं गुरुतरोत्पत्तिप्रवेशेन अनुमितेः स्वक्षणाव्यवहितोत्तरक्षणविशिष्टत्वञ्च स्ववृत्तित्वस्ववृत्तिध्वंसप्रति-योग्यवृत्तित्वोभयसम्बन्धेन इति वाच्यम्। एतदपेक्षया उत्-पत्तेरगुरुत्वात्।

न च कालिकसम्बन्धावच्छिन्नाभावस्य क्षणविशेषणत्वात् ततः समवायसम्बन्धावच्छिन्नाभावस्य सिद्धिविशेषणस्य भिन्न-तया द्वितीय इत्यादि ग्रन्थासङ्गतमिति वाच्यम्। समवाय-सम्बन्धावच्छिन्नाभावस्य स्वावच्छेदकशरीरावच्छेदेन कालिकेन स्वक्षणस्य सामानाधिकरण्येन सिद्धेर्वा विशेषणत्वादिति ध्येयम्। ननु जिज्ञासां विनापि व्यावृत्तिदाने ग्रन्थकारस्य न्यूनताविरहात् निखिलसंक्षेपानुसन्धानकर्त्तु र्दीधितिकारस्य सिषाधयिषाविरहपदव्यावृत्तिदाने जिज्ञासाबोधकग्रन्थो न सम्भवत्येव इत्यतस्तत्र निखिलसंक्षेप एव वीजं दर्शयति ग्रन्थ-लाघवार्थमित्यादिना।

तथाच सिषाधयिषाविरहपदैककथनेन विशेषणपदैक-कथनेन च लाघवं ग्रन्थस्येति भावः। अन्तिमसिषाधयिषा-विरहपदस्य इति व्यावृत्तिमभिधाय व्यावृत्तिं कथयित्वा न च प्राथमिकसिषाधयिषाविरहपदस्य व्यावृत्तिमभिधाय द्वितीयस्य प्रयोजनजिज्ञासायामपि लाघवसम्भवात् परित्यक्तुमयुक्तमिति वाच्यम्। लघुतरं ज्ञात्वैव व्यावृत्तिरभिहिता लाघवञ्च प्रश्नोत्तराभावेन।

केचित्तु ग्रन्थलाघवन्तु सिषाधयिषापदयोरनुपादाने प्रथम-

सिषाधयिषापदव्यावृत्तिदाने द्वितीयसिषाधयिषाविरहपदस्य यत्र अविरलक्रमेण सिद्धिसिषाधयिषानुमितयः तत्स्थल इव यत्र क्रमेण सिषाधयिषासिद्ध्यात्मकपरामर्शादनुमितिः तत्रापि व्यावृत्तिसम्भवेन तत्स्थलानभिधाने न्यूनता स्यात् अभिधाने च ग्रन्थगौरवं स्यात् इत्यतो द्वितीयस्य तत्पदस्य प्रथमं व्यावृत्तिमभिदधौ इत्याहुः।

ननु यत्र क्रमेण अनुमित्साप्रात्यक्षिकसिद्धिपरामर्शानुमितयः तत्र परामर्शक्षणे पक्षतासम्पत्तये अव्यवहितत्वप्रतियोगिकोटिनिविष्टस्वक्षणे सिषाधयिषाविरहो विशेषणमस्तु उत्तरत्वप्रतियोगिकोटिनिविष्टस्वक्षणे किमर्थं सिषाधयिषाविरहो विशेषणम्।

न च यत्र सिषाधयिषासिद्ध्यात्मकपरामर्शो भाविज्ञानमनुमित्यंशे अप्रामाण्यव्याप्यवत्त्वग्रहात्मकः तदनन्तरञ्च अप्रामाण्यात्मिकानुमितिः तदनन्तरमनुमित्यापत्तिः सिषाधयिषाविरहविशिष्टसिद्ध्यात्मकपरामर्शक्षणे अनुमित्युत्पत्तिक्षण एव तद्ध्वंसाधिकरणकालध्वंसानधिकरणत्वस्य सिद्ध्यधिकरणीभूतकालध्वंसाधिकरणत्वस्य च अप्रामाण्यज्ञानास्कन्दितानुमितिक्षणे सत्त्वात् तत्स्थलीयसिद्ध्यात्मकपरामर्शव्यक्तेस्तादृशक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतया प्रतिबन्धकत्वायोगात्। अनुमित्यात्मकसिद्धेश्च अप्रामाण्यज्ञानास्कन्दिततया तस्या अपि प्रतिबन्धकत्वं न सम्भवति। उत्तरत्वप्रतियोगिनिविष्टस्वक्षणे सिषाधयिषाविरहवैशिष्ट्योपादाने च सिषाधयिषाविरहविशिष्टस्वकालः अनुमित्युत्पत्तिकाल एव तद्ध्वंसाधिकरणत्वस्य च अनुमित्युत्पत्तिकाले विरहात्। तादृशपरामर्शात्मकसिद्धिव्यक्तेः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नायाः सिषाधयिषाविरहविशिष्टतादृश-

सिद्धिव्यक्तेरनुमित्युत्पत्तिक्षणे सत्त्वेन तत्स्थले अनुमित्युत्तरक्षणे नानुमित्यापत्तिः।

एवञ्च जगदीशोक्ततादृशस्वसमयध्वंसाधिकरणत्वभिन्नस्वसमयपदं क्षणपरमेव अवश्यं वक्तव्यम्। अन्यथा तादृशस्थले सिद्ध्युत्पत्तिकालपर्य्यन्तस्थायिस्थूलकालोपाधेरपि सिषाधयिषापूर्व्वदण्डाद्यवच्छेदेन सिषाधयिषाविशिष्टतदा तद्ध्वंसाधिकरणत्वस्य च अनुमित्युत्पत्तिक्षणे सत्त्वात् तादृशसिद्धेः प्रतिबन्धकत्वानुपपत्तिरिति वाच्यम्। उत्तरत्वप्रतियोगिनिविष्टस्वक्षणे सिषाधयिषाविरहवैशिष्ट्योपादानेऽपि यत्र क्रमेण सिषाधयिषाव्याप्तिस्मरणसिद्ध्यात्मकपरामर्शाप्रामाण्यज्ञानास्कन्दितानुमितयः तत्र अनुमित्युत्तरमनुमित्युत्पादस्य दुर्व्वारणीयत्वात्।

तथाहि परामर्शात्मकसिद्ध्युत्पत्तिक्षणस्यापि सिषाधयिषाविरहविशिष्टतया तादृशसिद्ध्युत्पत्तिक्षणध्वंसाधिकरणकालध्वंसानधिकरणत्वस्य तत्क्षणध्वंसाधिकरणत्वस्य च अनुमित्युत्पत्तिक्षणे सत्त्वात् परामर्शात्मकसिद्धिव्यक्तेस्तादृशक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतया प्रतिबन्धकत्वायोगात् अनुमितेश्च अप्रामाण्यज्ञानास्कन्दिततया प्रतिबन्धकत्वाभावेन अनुमित्युत्पत्तिक्षणे पक्षतासत्त्वात्।

न च तादृशस्थले अनुमितिधर्म्मिकाप्रामाण्यज्ञानबलात् अनुमित्यसिद्धौ तदप्रामाण्यज्ञानव्यक्तेरुत्तेजकत्वमेव न वाच्यम्। तथाच अनुमित्यात्मकसिद्धिव्यक्तेरेव अनुमित्युत्पत्तिक्षणे सत्त्वात् न तदुत्तरक्षणे अनुमित्यापत्तिरिति वाच्यम्। तत्रैव परामर्शान्तरोत्पत्त्या अनुमित्युत्पादेन तादृशस्थले अनुमितिधर्म्मिकाप्रामाण्यज्ञानस्यापि अवश्यमुत्तेजकत्वादिति, चेन्न। तादृशस्थले तत्परामर्शविशिष्टतदप्रामाण्यज्ञानव्यक्तेरुत्तेजक-

त्वोपगमादेव न परामर्शक्षणे अनुमित्यापत्तिः अप्रामाण्यज्ञाने परामर्शपूर्वं तद्वैशिष्ट्याभावात् । परामर्शक्षणे च परामर्शविशिष्टाप्रामाण्यज्ञानसत्त्वादेव पक्षतासत्त्वात् उत्तरक्षणे अनुमितिः सम्भवति ।

न च एवं सति पूर्वोक्तसिषाधयिषासिद्ध्यात्मकपरामर्शाप्रामाण्यज्ञानात्मिकानुमितयः ततः परामर्शान्तरोत्पत्त्या पुनरनुमितिः तत्रापि परामर्शविशिष्टतदप्रामाण्यज्ञानव्यक्तेरुत्तेजकत्वोपगमादेव अप्रामाण्यज्ञानास्कन्दितानुमितिरित्येव वाच्यम् । अथ तादृशक्षणध्वंसाधिकरणत्वमित्यत्र तादृशपदं किमर्थमिति चेन्न । अनुमित्सासिद्धिरूपपरामर्शोऽप्यनन्तरम् अप्रामाण्यज्ञानयुक्तानुमिति र्यत्र जायते ततोऽनुमित्यनुत्पत्त्यै विशेषेऽपि दले पुनः सिद्धिकाले तादृशत्वं जागदीश्यां निवेशितम् ।

यत्र सिद्ध्यात्मकपरामर्शाप्रामाण्यज्ञानास्कन्दितानुमितयः क्रमेणोत्पन्नाः तत्र तादृशानुमित्यन्तरमनुमित्यापत्तिः । स्वानुमितेरप्रामाण्यज्ञानास्कन्दितत्वेन अप्रतिबन्धकत्वात् । तत्पूर्वोत्पन्नसिद्धेस्तु तादृशपदाघटितनिरुक्ताव्यवहितोत्तरक्षणोत्पत्तिकतया अप्रतिबन्धकत्वाच्च । उक्तानुमितितृतीयक्षणे अनुमित्यर्थमप्रामाण्यज्ञानव्यक्तेरुत्तेजकत्वस्य स्वीकार्य्यत्वात् । यद्यपि तादृशपददाने यत्र सिषाधयिषानाशकालोत्पन्नसिद्ध्यात्मकपरामर्शः ततः अप्रामाण्यज्ञानास्कन्दितानुमितिः तत्र तदनन्तरमनुमित्यापत्तिवारणाय तत्तदप्रामाण्यज्ञानस्य उत्पत्त्यादिसम्बन्धेन प्रतिबन्धकत्ववत् अत्रापि तत्तदप्रामाण्यज्ञानस्य प्रतिबन्धकत्वकल्पनेनैव तत्रापत्तिवारणसम्भवेन तादृशपदवैयर्थ्यसम्भवात् । तथापि सहस्रसहस्रस्थले तत्तदप्रामाण्यज्ञानस्य प्रतिबन्धकत्वकल्पनायं अनन्तकार्य्यकारणभावकल्पनमपेक्ष्य तादृशपदोपादानमिति विभावनीयम् ।

अथ स्वक्षणाव्यवहितोत्तरक्षणवृत्तित्वस्ववृत्तिप्रागभाव-प्रतियोगित्वोभयसम्बन्धेन सिद्धिविशिष्टानुमितिकत्वनिवेशेनैव उक्तदोषवारणसम्भवे गुरुतरोत्पत्तिनिवेशो व्यर्थ इति चेत्। प्रागभावानङ्गीकृत्यैव उत्पत्तिनिवेशात्। न च प्रागभावानङ्गीकारेऽपि स्वक्षणाव्यवहितोत्तरक्षणविशिष्टानुमितिकत्वनिवेशेनैव तथापि उक्तदोषाभावात् नोत्पत्तिर्निवेशनीया। तादृश-वैशिष्ट्यञ्च स्ववृत्तित्वस्ववृत्तिध्वंसप्रतियोग्यवृत्तित्वोभयसम्बन्धेनेति वाच्यम्। ईदृशनिवेशस्य उत्पत्तिनिवेशापेक्षया लाघवा-नवकाशात्।

अथ यत्र अविरलक्रमेणेति दीधितिः। द्वितीयो द्वितीय-सिषाधयिषाविरहपदेनोपात्तः। सिषाधयिषाविरहस्य एकत्वेन द्वितीयत्वायोगात्। अत्रेदमयुक्तम्। स्वक्षणविशेषणीभूतस्य सिषाधयिषाविरहस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताक-त्वेन भेदानुयोगिसिद्धिविशेषणीभूतस्य समवायसम्बन्धावच्छिन्न-प्रतियोगिताकतया तयो र्मिथो भेदादिति चेत्। अत्र केचित् द्वितीयत्वादेरुत्पत्तिघटितत्वाभिप्रायेणेदम् एकत्वेन इत्यस्य नित्यत्वेन इत्यर्थ इत्याहुः। तच्चिन्त्यम्। वस्तुतस्तु स्वक्षण-विशेषणमपि समवायसम्बन्धावच्छिन्नप्रतियोगिताकाभाव एव। तस्य वैशिष्ट्यञ्च स्वनिरूपितात्मवृत्त्यधिकरणतावच्छेदकत्वसम्ब-न्धेन। तथाच तस्य एकत्वेन ग्रन्थसङ्गतिः।

न च स्वनिरूपितात्मवृत्त्यधिकरणतावच्छेदकत्वसम्बन्धेनापि वैशिष्ट्यनिवेशे सिद्धौ सामानाधिकरण्यरूपवैशिष्ट्ययुक्तं गौरवदान-मसङ्गतम्। उक्तसम्बन्धापेक्षया सामानाधिकरण्यसम्बन्धस्य गुरु-त्वाभावादिति वाच्यम्। सिद्धौ सिषाधयिषाविरहवैशिष्ट्यनिवेशे एकक्षणावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन सिषाधयिषाविरह-विशिष्टाधिकरणतानिवेशस्यैव आवश्यकत्वम्। क्षणत्वस्य निवेशे

केवलासिद्ध्यधिकरणताया एव निवेश इति विशिष्टाधिकरणतानिवेश एव गौरवम् इत्यत्रैव उक्तग्रन्थस्य तात्पर्य्यात्। अथवा स्वक्षणे सिषाधयिषाविरहवैशिष्ट्यस्य अवच्छेदकतासम्बन्धेनैव निवेशः। घटादौ समवायसम्बन्धावच्छिन्नसिषाधयिषाविरहस्य व्याप्यवृत्तितया तस्य अवच्छेदकत्वविरहादेव सिषाधयिषाधिकरणक्षणे अवच्छेदकत्वसम्बन्धेन सिषाधयिषाविरहवैशिष्ट्यासम्भवात्। सिषाधयिषाधिकरणमादाय न दोषः। तथाच केवलावच्छेदकत्वसम्बन्धेन स्वक्षणे सिषाधयिषाविरहवैशिष्ट्यापेक्षया सिद्धौ सामानाधिकरण्यसम्बन्धेन तद्वैशिष्ट्यस्य गुरुत्वादिति।

केचित्तु कालिकसम्बन्धावच्छिन्नप्रतियोगिताकसिषाधयिषाविरहवैशिष्ट्य एव उभयत्रैव निविष्टः अत एव तस्य एकत्वेन ग्रन्थसङ्गतिरित्याहुः। तन्न। सिद्धौ सिषाधयिषाविरहवैशिष्ट्यस्य सामानाधिकरण्यसम्बन्धेन दीधितिकृता अग्रे विवक्षणीयतया तद्ग्रन्थस्य असङ्गतत्वापत्तेरिति ध्येयम्। ननु यत्र सिषाधयिषासिद्ध्यात्मकपरामर्शानुमितयः क्रमेणोत्पन्नाः तत्रापि सिषाधयिषाविरहपदस्य व्यावृत्तिसम्भवेन क्रमेणेत्युक्तं व्यर्थमिति चेन्न। प्राथमिकसिषाधयिषाविरहस्य व्यावृत्तेरग्रे दातव्यत्वेन अधुना तदनिवेशमनुसृत्यैव अविरलक्रमेण पर्य्यनुसरणादिति ध्येयम्।

अथ स्वध्वंसाधिकरणत्वघटितवृतीयक्षणसाधारणाव्यवहितोत्तरत्वकल्पे स्वध्वंसाधिकरणसमयध्वंसानधिकरणत्वे सति स्वध्वंसाधिकरणो यः क्षणस्तद्वृत्तिकानुमितिकाभिन्नसिद्ध्यभावस्यैव पक्षतात्वेनैव अनुपपत्त्यसम्भवोत्पत्तिनिवेशो व्यर्थः। न च यत्र सिषाधयिषानाशकालोत्पन्नापेक्षात्मकासिद्ध्यात्मकपरामर्शानुमितौ क्रमेणोत्पन्ने तत्रस्थस्मिन्चतुर्थक्षणे साधारण्यनिरुक्ता-

व्यवहितोत्तरक्षणवृत्तिकानुमितिकभिन्नतया प्रतिबन्धकत्वे नानुमिति र्न स्यात्। अत उत्पत्तिनिवेश इति वक्तव्यम्। एतावता स्वध्वंसाधिकरणत्वमपहाय स्वाधिकरणसमयध्वंसाधिकरणत्वस्य विवक्षितत्वात्। अपेक्षात्मकानुमित्यन्तरमनुमितेर्वारणाय स्वेतरत्वमपि अनुमितौ विशेषणीयमिति चेन्न। यत्र अपेक्षात्मकपरामर्शसिषाधयिषानुमितयः क्रमेणोत्पन्ना तत्र सिषाधयिषोत्पत्तिकाले अनुमितिप्रसङ्गात्। उक्तसिद्धे सिषाधयिषाविरहविशिष्टो यः स्वक्षणाव्यवहितोत्तरक्षणः त त्तिकानुमितिकतया अप्रतिबन्धकत्वात्। प्रकृते तु उक्तस्य अनुमित्युत्पत्तिक्षणे अव्यवहितोत्तरत्वसत्त्वेऽपि सिषाधयिषा विरहवैशिष्ट्यविरहात् सिषाधयिषाविरहविशिष्टो यः स्वाव्यवहितोत्तरक्षणः तदुत्पत्तिकानुमितिकभिन्नत्वेनैव उक्तसिद्धेः प्रतिबन्धकतया न सिषाधयिषाक्षणे अनुमित्यापत्तिः का शक्यते इति ध्येयम्।

मद्विधास्तु सिषाधयिषानाशकालोत्पन्नसिद्धात्मकपरामर्शः ततोऽनुमितिः ततोऽनुमित्यन्तरं जायतामितीच्छा त सिद्धात्मकपरामर्शानुमितौ क्रमेणोत्पन्ने तत्र आद्यसिद्धिव्य सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणाप्रसिद्धा रुक्ताव्यवहितोत्तरक्षणवृत्तिकभिन्नत्वेन प्रतिबन्धकतया प्रथमानुमितेरुच्छेदापत्तेः प्रकृते उत्पत्तिपर्य्यन्तानुसरणमिति। यद्यपि स्वध्वंसघटिताव्यवहितोत्तरत्वकल्पे स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नाभावस्यैव सम्यक्त्वात् सिद्धिपदं व्यर्थम् एवञ्च सिषाधयिषाविरहपदद्वयोपादानञ्च तथेति।

अथ यत्रानुमित्यात्मकसिद्धात्मकपरामर्शानुमित्यनन्तरं जायतामितीच्छानुमितयः क्रमेणोत्पन्नाः तत्र सिद्धिव्य स्वक्षणाव्यवहितोत्तरोत्पत्तिकानुमितिकतया अप्रतिबन्धक

त्वात् स्वपूर्ववर्त्तिनां फलेच्छादीनाञ्च निरुक्ताव्यवहितोत्तरक्षणोत्पत्तिकत्वात्मकानुमितिकतया अप्रतिबन्धकत्वाच्च। अतः सिषाधयिषोत्पत्तिकाले अनुमितिवारणाय तत्रैव च अनुमित्यर्थं सिषाधयिषाद्वयोपादानस्य सार्थक्यसम्भवात् कथं वैयर्थ्यमिति चेत्। अत्र केचित् एतद्दोषभिया स्वाव्यवहितपूर्वक्षणोत्पत्तिमत्त्वसम्बन्धेन स्वविशिष्टानुमितित्वेनैव उत्पत्तिसम्बन्धेन प्रकृतानुमितौ प्रतिबन्धकत्वं वाच्यम्। तावतैव उक्तस्थले इच्छोत्पत्तिकाले अनुमितिवारणसम्भवे गुरुतरसिषाधयिषाद्वयोपादानं व्यर्थम्। स्वपदं प्रकृतानुमित्यापरम्। तद्वैशिष्ट्यञ्च उपलक्षणविधया निविष्टमित्यप्याहुः। तन्न अत्यन्तरम्यक्। उक्तरीत्या अनुमितिविशिष्टान्याभावत्वेनैव स्वत एककारणपरिशेषापत्तिभिया ईदृशरीत्या प्रतिबन्धकत्वकल्पनाया अयुक्तत्वात् विवक्षितविवेकेन लाघवानवकाशाच्च।

यत्तु उक्तस्थले इच्छोत्पत्तिकाले अनुमितिवारणाय समूहालम्बनानुमितिस्थलीयानुमितिव्यक्तेरेव उत्पत्तिसम्बन्धेन प्रतिबन्धकत्वकल्पनस्य आवश्यकत्वात् अलं सिषाधयिषाद्वयोपादानेन। अन्यथा सिषाधयिषाविरहद्वयोपादानेऽपि तत्र सिषाधयिषायां स्वविषयसिद्ध्यनुपहितत्वनिवेशस्य आवश्यकत्वात् उक्तसमूहालम्बनानुमितिव्यक्तेरेव स्वविषयसिद्ध्यनुपहितत्वविशिष्टस्वाव्यवहितोत्तरतृतीयक्षणोत्पत्तिकतया उक्तदोषवारणासम्भवात् इत्यभिप्राय इत्यप्याहुः। तन्न। यत्र अपेक्षात्मकसिद्ध्यात्मकपरामर्शसिषाधयिषानुमितयः तत्र अनुमित्यन्तरम् अनुमितिवारणाय सिद्धौ विशेषणीभूतस्य सिषाधयिषाविरहस्य प्रतियोगिन्यां सिषाधयिषायां स्वविषयसिद्ध्यनुपहितत्वनिवेशेऽपि अव्यवहितोत्तरक्षणनिविष्टस्य सिषाधयिषाविरहस्य प्रतियोगिन्यां तन्निवेशस्य प्रयोजनविरहेण अना-

वश्यकत्वात्। तथाच अनन्ततत्तद्व्यक्तेरुत्पत्तिसम्बन्धेन प्रति-बन्धकत्वकल्पनमपेक्ष्य निरुक्तसिषाधयिषाविरहद्वयोपादानमेव युक्तत्वात्। मैवम्। सिषाधयिषानुगतरूपे उत्तेजकत्वे अति-प्रसङ्गात् अतः अननुगततत्तद्व्यक्तित्वादिरूपेणैव उत्तेजकत्वं वाच्यम्। सिद्धिघटिताव्यवहितोत्तरत्वकल्पे यत्र प्रात्यक्षिक-सिद्धिसिषाधयिषानुमितयः तत्र स्थलीयसिषाधयिषापि तत्त-द्व्यक्तित्वादिरूपेण अभावद्वयं निवेशनीयम्। तथाच सिद्धि-मात्राघटितनिरुक्ताभावभिन्नत्वकल्पे प्रागुक्तानुमित्यात्मकपरा-मर्शस्थलीयसिषाधयिषया अभावद्वयनिवेशेऽपि प्रात्यक्षिक-सिद्ध्यात्मकपरामर्शकालीनसिषाधयिषाविरहस्य प्रयोजनविर-हेण अनिविष्टतया सिषाधयिषाविरहद्वयोपादानं व्यर्थमित्यः एव तात्पर्य्यादिति ध्येयम्।

सिषाधयिषाविरहविशिष्टस्य सिद्धनुमानातिरिक्तसाधक-मानयोरन्यतरस्याभावः कारणम् इति यन्नपतिमतम्। साध-कमानं हि सिद्धिस्वरूपयोग्यं तदुपहितम् इति कल्पस्य सिद्धेः प्राक् तदुपहितत्वाभावेन प्रत्यक्षसामग्रीसत्त्वे अनुमित्यापत्तेः अनुमानातिरिक्त इत्यस्य वैयर्थ्याच्च इत्यनेन दूषितं शिरोम-णिना। तत्र तदुपहितं तया सिद्ध्या उपहितं विशिष्टं पक्ष-तावच्छेदकसामानाधिकरण्येन सिद्धिविशिष्टं सत् तादृश-सिद्धिजनकमिति जगदीशेनोक्तम्। अत्र सिद्धे वैशिष्ट्यं कालि-कसम्बन्धेन अन्यथा अव्यवहितपूर्वत्वसम्बन्धेन सिद्धिवैशिष्ट्याभ्यु-पगमे सिद्धेः प्राक् तदुपहितत्वाभावेन इत्युत्तरग्रन्थविरोधापत्तेः।

न च सामान्यतः सिद्धिविशिष्टमेव निवेश्यतां किं पक्षता-वच्छेदकसामानाधिकरण्येन इति वाच्यम्। प्राचीनमते अवच्छेदावच्छेदेन सामानाधिकरण्येन च सिद्धिसाधारणानु-गतसिद्धित्वस्याभावात्। अवच्छेदावच्छेदेन सिद्धिवैशिष्ट्य-

निवेशे तादृशसिद्धिप्रतिबन्धकतयैव सामञ्जस्ये तादृशसिद्धि-विशिष्टसिद्धिजनकस्य प्रतिबन्धकाभावैवैयर्थ्यापत्तेः। अतः पक्षतावच्छेदकसामानाधिकरण्येन इत्युक्तम्। न च पक्षताव-च्छेदकसामानाधिकरण्येन सिद्धिवैशिष्ट्यनिवेशेऽपि वैयर्थ्य-मिति वाच्यम्। पक्षतावच्छेदकावच्छेदेन अनुमितिस्थले सार्थक्यसम्भवात्। अन्यथा पक्षतावच्छेदकसामानाधिकरण्येन प्रत्यक्षात्मकसिद्धिविशिष्टतादृशसिद्धिसामग्रीदशायां पक्षताव-च्छेदकावच्छेदेन अनुमित्यापत्तेः। न च तत्र अनुमितिरेवेति वाच्यम्। तादृशस्थले पक्षतावच्छेदकावच्छेदेन अनुमित्यनुत्-पादस्य ग्रन्थकृता वक्ष्यमाणतया एतन्मते तदनभ्युपगमात्।

अतएव अनुमानातिरिक्तस्य वैयर्थ्यात् इत्यनेन अनुमाना-तिरिक्तत्वरूपसिद्धिविशेषणमात्रस्य वैयर्थ्यं दीधितिकृदुक्तम् यथाश्रुतमेव एतन्मते सङ्गच्छते। भट्टाचार्य्यमते इयांस्तु विशेषः। तन्मते पक्षतावच्छेदकसामानाधिकरण्येन प्रत्यक्ष-सामग्रीदशायां पक्षतावच्छेदकावच्छेदेन अनुमित्युत्पादा-भ्युपगमात्। तत्र तादृशसामग्र्याः प्रतिबन्धकत्वानुपगमेन साध-कमानान्तदलवैयर्थ्येन अनुमानातिरिक्तेत्यस्य नातिरिक्तसाध-कमानपरत्वमभिहितम्। तन्मते सिद्धेः प्रतिबन्धकतयैव साम-ञ्जस्यादुक्तं हि तैस्तदुपहितं स्वजन्यसिद्धिविशिष्टमिति ध्येयम्।

ननु सामानाधिकरण्येन बाधनिश्चयः ततः सामानाधि-करण्येन अवच्छेदावच्छेदेन च परामर्शः ततः सामा-नाधिकरण्येन अनुमितिः ततोऽवच्छेदावच्छेदेन अनुमित्युत्-पत्तये अनुमानातिरिक्त इत्यस्य आवश्यकत्वे तद्वैयर्थ्याभिधान-मसङ्गतमिति। न च उपाध्यायमते अवच्छेदावच्छेदेन अनु-मतिः अनुमितिग्रन्थे यन्नपत्युपाध्यायमते पक्षतावच्छेदक-सामानाधिकरण्येनैव अनुमितिरिति जागदीश्यासुक्तत्वादिति

वाच्यम्। तद्ग्रन्थस्य कालादिपक्षतावच्छेदकानुमिति‍...
मात्रपरत्वात्।

तथाहि मणिकारमते कालादिपक्षतावच्छेदकविशिष्टपक्षे साध्यानुमितौ साध्ये स्वरूपसम्बन्धरूपं तादृशपक्षतावच्छेदकावच्छेद्यत्वं भासते न तु आचार्य्यानुयायिनां प्राचां मते। अतएव आचार्य्यानुमाने नवीननये तु कालादेः पक्षतावच्छेदकत्वे तदवच्छिन्नत्वं साध्यस्य भासते इति दीधितिव्याख्याने। आचार्य्यमते पक्षतावच्छेदकसामानाधिकरण्येनैव अनुमितिरित्युपगमेन नवीननये इत्युक्तमिति जागदीश्यामभिहितम्। वाधग्रन्थे च व्यापकस्य पक्षसत्त्वं विना व्याप्यस्य पक्षसत्त्वमनुपपन्नमिति पक्षे व्यापकभाने व्याप्यसत्त्वमेव बलम्। न तु व्यापके स्वरूपसम्बन्धरूपपक्षतावच्छेदकावच्छिन्नत्वभाने तेन विनापि तदुपपत्तिरित्यभिप्रायवतां प्राचां मतानुसारिणा यज्ञपतिना मणिकारोक्तस्वरूपसम्बन्धरूपकालादिपक्षतावच्छेदकावच्छिन्नत्वस्य साध्यांशे भानमेव दूषितवता व्यापकत्वरूपपक्षतावच्छेदकावच्छेद्यत्वभानमवश्यमङ्गीकार्य्यं युक्तेस्तौल्यात्।

अतएव बाधग्रन्थे ननु सर्व्वत्रैव अनुमितौ साध्ये पक्षतावच्छेदकसामानाधिकरण्यमेव भासते न तु पक्षतावच्छेदकावच्छिन्नत्वमपि। अथ व्याप्यस्य पक्षतावच्छेदकव्यापकत्वरूपं तदवच्छिन्नत्वं साध्यस्य तादृशतदवच्छिन्नत्वमन्तरेण नोपपद्यते इति तदवगाहिनः परामर्शात् साध्ये पक्षतावच्छेदकव्यापकत्वरूपतदवच्छेद्यत्वावगाहिन्यनुमितिर्युक्तैव इति चेत्। भवतु तादृशपरामर्शात् पक्षतावच्छेदकावच्छेदेन अनुमितिरित्यादिना उपाध्यायमतानुयायिनाम्। कालादिपक्षतावच्छेदकसामानाधिकरण्यस्य साध्ये भानस्वङ्गी-

कुर्व्वतामभिप्रायं वर्णयतो दीधितिकारस्य आभासो भट्टाचार्य्येण दत्त इति चेन्न। तादृशसिद्धिजनकमित्यस्य सामानाधिकरण्येन सिद्धव्यवहितप्राक्क्षणवृत्तित्वविशिष्टार्थकत्वावश्यकत्वात्। अन्यथा यत्र पक्षतावच्छेदकसामानाधिकरण्यावगाहिसाध्यप्रत्यक्षदशायां यत्किञ्चित्कारणावमर्मः तदनन्तरम् अवच्छेदावच्छेदेन अनुमित्यनुपपत्तेः तत्र तादृशसिद्धिविशिष्टस्य कालान्तरीणसाध्यप्रत्यक्षकारणचक्षुरादेः सत्त्वात् सिद्धौ अनुमित्यतिरिक्तत्वविशेषणदानेऽपि अनिस्तारात्। तादृशसिद्धिजनकमित्यस्य सामानाधिकरण्येन सिद्धिप्राक्क्षणवृत्तित्वविरहक्षणे च तत्र सिद्धिवैशिष्ठ्यावच्छेदेन तादृशसिद्धिप्राक्क्षणवृत्तित्वविरहक्षणे च तत्रत्यसिद्धिवैशिष्ट्यावच्छेदेन तादृशसिद्धिप्राक्क्षणवृत्तित्वविरहादनुपपत्तिविरहात्।

न च सामान्यतः सिद्धव्यवहितप्राक्क्षणवृत्तित्वविवक्षणे सिद्धौ अनुमित्यतिरिक्तत्वविशेषणदाने च उक्तानुपपत्तिवारणसम्भवे सामानाधिकरण्यावगाहित्वं निवेश्य तद्वैयर्थ्यदानमनुचितमिति वाच्यम्। प्राचां मते प्रकारतावच्छेदकधर्मभेदेनैव तदवच्छेदकसंसर्गभेदेनापि निश्चयत्वभेदात्। सामान्यतः सिद्धित्वस्य अनुगतत्वाभावेन प्राचां मतानुसारेणैव तद्ग्रन्थप्रणयनाच्च। तथा विवक्षणासम्भवात् अर्थवशसम्पन्नपक्षतावच्छेदकसामानाधिकरण्यावगाहित्वनिवेशस्य आवश्यकत्वेन तद्वैयर्थ्यस्य दुर्वारत्वात्।

न च सामानाधिकरण्येन सिद्ध्युपहितसामग्र्या तादृशसिद्ध्यन्तरजननदशायाम् अनुमितिवारणार्थम् उक्तरूपेण पक्षताशरीरे निवेशवत् तादृशसामग्र्या अवच्छेदावच्छेदेन सिद्ध्यन्तरजननदशायामपि अनुमितिवारणाय सिद्धिविशिष्टावच्छेदकावच्छेद्यत्वावगाहिसिद्धिप्राक्क्षणवृत्तित्वविशिष्टत्वेनापि

तत्र निवेशावश्यकतया उक्तानुपपत्तिवारकतया च उक्तविशेषणसार्थक्यमिति वाच्यम्। अनुगतसिद्धित्वाभावस्य अवच्छेदावेदितत्वेन अवच्छेदकावच्छेदेन सिद्धेः प्रतिबन्धकतयैव सामञ्जस्ये तद्विशिष्टस्य प्रतिबन्धकत्वासम्भवेन च तदुपहितमित्यत्र तत्पदस्य सामानाधिकरण्यावगाहिसिद्धिमात्रतात्पर्य्यकतया तत्पदेन तादृशसिद्धिमात्रस्यैव ताद्रूप्येणोपस्थानात् न तु अवच्छेदकावच्छेदेन सिद्धेरिति।

सामानाधिकरण्यावगाहिसिद्धिविशिष्टत्वे सति अवच्छेदकावच्छेदेन सिद्धिप्राक्क्षणवृत्तित्वविशिष्टस्य तदुपहितशब्देनाप्रतिपादनात् तस्य पक्षताशरीरे निवेशितुमशक्यत्वेन उक्तरीत्या सार्थक्यसम्भवात्। उक्तापत्तिवारणन्तु प्रथमसिद्धिसामग्र्या इव अवच्छेदकावच्छेद्यत्वावगाहिसिद्धिसामग्र्या अस्तातन्त्र्येण प्रतिबन्धकत्वादेव इत्याशयात्। न च तादृशसिद्धिप्राक्क्षणवृत्तित्वविशिष्टत्वमेव अस्तु किं सामानाधिकरण्येन सिद्धिविशिष्टत्वदलेन, तथा सति उक्तवैयर्थ्यमपि नास्तीति वाच्यम्। एतस्यैव ध्येयमित्यनेन अनुपदमेव कटाक्षविधया वक्ष्यमाणत्वात्। अतएव तज्जनकमित्यनभिधाय तादृशसिद्धिजनकमित्यत्र तादृशपदोपादानमपि सार्थकम्। अन्यथा एकव्यक्तेर्वैशिष्ट्यापन्नस्य तद्व्यवहितप्राक्क्षणवृत्तित्ववैशिष्ट्यनिवेशासम्भवात्। एतन्मते च पक्षतावच्छेदकावच्छेदेन अनुमितिस्थल एव न तदुपहितमितिद्वितीयशङ्का। न तु तत्सामानाधिकरण्येन अनुमितिस्थले तत्र सिद्धेः प्रतिबन्धकतयैव सामञ्जस्यात् इत्येतद्ग्रन्थकृतामाशय इति सर्वं चतुरस्रम्।

इति पण्डितकुलपतिना बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण सङ्कलितः जगदीशकृतपक्षताटीकायाः वादार्थः समाप्तः।

---



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागरः वि, ए

PANDIT KULAPATI

JIBANANDA VIDYASAGARA, B. A.

*Superintendent, Free Sanskrit College, Calcutta.*